* श्रीमते रामानन्दायनमः *

॥ श्रीरघुनाथायनमः ॥

# गीता तात्पर्य निर्णय:

यः स्वानन्यभक्तानां सुलभोऽनंतरूपवान् ॥
तं रामं सच्चिदानन्दं वन्देऽहं पुरुषोत्तमम् ॥

इह खलु सकल वेदपूर्वापर वाक्यैकवाक्यता करणेन तद्गूढ तात्पर्यं निर्द्धार्य ज्ञातुमसमर्थान् मन्दमतीन् जीवानवलोक्य धर्मसंस्थापनाय साधु परित्राणाय चावतीर्णः परमकारुणिको भगवान् सर्वज्ञः सकलोपनिषत्सारार्थ प्रका-

---

॥ श्रीसीतारामाभ्यां नमः ॥

करुणार्णव रूपाय परमानन्द दायिने ।
श्रीमते रामवल्लभाय शरणाय गुरवे नमः ॥

इस संसारमें सम्पूर्ण वेदोंके पूर्वा पर वाक्योंकी एक वाक्यता करनेके लियेवेदों के गूढ़ तात्पर्यको निर्णयकरके जानने में असमर्थ मन्दमति जीवोंको देखकर धर्म संस्थापन और साधु परित्राण करने के लिये अवतीर्ण हुए। परम कारुणीक सर्वज्ञ भगवान् श्रीकृष्णजीने सम्पूर्ण उपनिषदोंके सार अर्थ को प्रका-

शकं गीताख्य शास्त्रं स्व प्रपन्नार्जुनोद्देशेन नेहावतार्य्य तत्र तेषु साधूनामनुष्ठेयं कर्म ज्ञान भक्ति योगमुपदिदिक्षुरादौ कर्मयोगज्ञानयोग स्थिति भेदेन द्विविधां निष्ठां प्रकाश्यानंतरमुक्त निष्ठाद्वयसाध्यं परमपुरुषार्थस्वप्राप्त्युपायभूतं स्वानन्यभक्ति योग मुपदिदेशार्जुनं प्रति "अनन्य चेताः सततं यो मां स्मरति नित्यशः। तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः॥ पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ॥ अन-

---

शन करने वाले गीता नामक शास्त्र को अपनी शरणमें प्राप्त अर्जुनके बहानेसे प्रगट किया। और उस गीतामें सज्जनों के अनुष्ठान करने योग्य कर्मज्ञान और भक्ति योगका उपदेश देने की इच्छासे आरंभमें कर्मयोग और ज्ञानयोग की स्थिति-भेदसे दो प्रकार की निष्ठा को दिखाकर उसके बाद दोनों निष्ठाओंसे साध्य जो परम पुरुषार्थरूप अपनी प्राप्तिके उपायभूत स्वानन्य भक्तियोग को अर्जुनके प्रति आपने उपदेश किया।

"जैसे अनन्यचित्त होकरके जो हमारा नित्य स्मरण करता है। हे अर्जुन उस नित्ययुक्त योगीके लिये हम अत्यन्त सुलभ हैं। —हे अर्जुन वह परम पुरुष अनन्य भक्तिसेही प्राप्त हो सकता है॥ अनन्यतया चिंतवन करते हुए जो भक्त हमारी

न्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ॥ तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ॥ मामेवैष्यसि युक्त्वैव मात्मानं मत्परायणः ॥ भक्त्यात्वनन्यया शक्योऽहमेवं विधोऽर्जुन। ज्ञातुं द्रष्टुं च तत्वेन प्रवेष्टुं च परंतप ॥ मत्कर्म कृत्मत्परमो मद्भक्तः संगवर्जितः । निर्वैरः सर्व भूतेषु यः समामेति पांडव ॥ मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते । श्रद्धया परयोयेता-

---

उपासना करते हैं, नित्यही हमारेमें अभियोग करनेवाले उन भक्तोंका योगक्षेम मैं स्वयं वहन करता हूं ।

मेरेमें मनको लगावो, हमारे भक्त होवो, हमारा यजन करो, हमको नमस्कार करो, और हमारे परायण होवो इस युक्ति से हमको प्राप्त होवोगे ।

हे अर्जुन ! इसप्रकारसे अनन्य भक्ति सेही हम जाने जा सकते हैं और यथार्थतया देखे भी जा सकते हैं और अनन्य भक्ति से ही प्रवेश करने योग्य होते हैं ।

हमारे लिये कर्म करो हमारेमें परत्व बुद्धि करो और संग को छोड़कर हमारा भक्त होवो और सब प्राणियोंमें वैरको त्याग दो । हे अर्जुन ! ऐसा ही प्राणी हमको प्राप्त होता है । जो भक्त नित्ययुक्त होकरके हमारेमें मनको आवेशित करके परम श्रद्धा

स्ते मे युक्त तमा मताः ॥ ये तु सर्वाणि कर्माणि मयि सन्न्यस्य मत्पराः । अनन्येनैव योगेन मां ध्यायंत उपासते ॥ तेषामहं समुद्धर्त्ता मृत्यु संसार सागरात् ॥ भवामि न चिरात्पार्थ मय्यावेशित चेतसामि, त्यादिना,, एवमुक्त वाक्यैः स्वानन्य भक्तेः स्वावश्य प्रापकत्वं. प्रकाशयित्वापि तदेव द्विर्बद्ध सुबद्ध न्यायेन दृढयितुं पुनः तस्याः स्वावश्यप्रापकत्वं स शपथं प्रतिज्ञाय शास्त्रमुपसंहृतवान् "मय्येव मन आधत्स्व

से हमारी उपासना करते हैं वे ही हमारे मतसे युक्ततम हैं और जो सर्व कर्मोंका न्यास हमारे में कर देते हैं और हमारे अधीन होते हुए अनन्य योगसे हमारा ध्यान करते हुए मेरी उपासना करते हैं उनको मृत्यु संसार सागरसे शीघ्रही उद्धार करनेवाले हम होते हैं। हे पार्थ ! जिन्होंने हमारेमें चित्तको लगा रखा है उनकी बहुत जल्दी संसार सागरसे रक्षा करता हूं,, ।

इन वाक्योंसे भगवान् श्रीकृष्णजीने अर्जुनको उपदेश किया। और इन्हीं वाक्योंसे अपनी अनन्य भक्तिसे ही हम वश में होते हैं, और अनन्य भक्ति को ही अपनी प्राप्ति का साधन प्रकाशित करके उसीको "द्विर्बद्धं सुबद्धं भवति" इस न्यायसे दृढ़ करनेके लिये स्वानन्य भक्ति को ही अपनी प्राप्ति का अवश्य साधकताका सपथ करके शास्त्रका उपसंहार किया है। हमारे

मयि बुद्धिं निवेशय। निवशिष्यसि मय्येव अत ऊर्ध्वं न संशयः ॥ मन्मनाभवमद्भक्तो मद्याजीमां नमस्कुरु मामेवैष्यसि सत्यन्ते प्रतिज्ञाने-प्रियोऽसि मे,, इति मय्येवमनआधत्स्व समाधत्स्व मय्येव मनसः समाधिंकुरु "अथ चित्तं समाधातुं न शक्नोषि मयि स्थिर मित्यत्र मयि चित्त स्थिर समाधान वचनेन त्वस्मिञ्चित्त

में ही मनको स्थापित करो, हमारेमें ही बुद्धि लगावो, इसके बाद हमारेमें ही प्रविष्ट हो जावोगे। अर्थात् ऐसाअभ्यास करते हुए अन्तमें हमही को प्राप्त हो जावोगे। पुनः हमारेमें मन लगावो हमारे भक्त होवो, हमारा ही यजन करो, हमको नमस्कार करो। ऐसा करनेसे आप हमको प्राप्त होजावोगे, यह मैं सत्य कहता हूँ। और प्रतिज्ञा करता हूं आप हमारे अत्यन्त प्रिय हैं, अर्थात् इस प्रकारसे भजन करने वाले भक्तके हमें अत्यन्त अधीन हो जाते हैं। उपरोक्त इन दोनों श्लोकोंके अर्थको भाष्यकार स्वयंभी लिखते हैं। 'मय्येव मन आधत्स्व' इस पदका अर्थ भाष्यकारजी लिखते हैं कि हमारे में ही मन की समाधी को करो। क्योंकि 'अथचित्तं समाधातुं न शक्नोषि मयि स्थिरम्' यहाँ पर हमारेमें चित्तके स्थिर और समाधानके वचनसे हमारेमें ही चित्त की समाधि कही गई है-इससे हमारे में मन की सहज रूपा समाधि वृत्ति करो। यही अर्थ पूर्व पद का

समाधे रुक्तत्वान्मय्येव मनसो सहजां वृत्तिं कुर्वित्यर्थः। मयि बुद्धिं निवेशय नामबुद्धेर्वृत्तिं मय्येकाकारं कुर्वित्यर्थः तदेव स्पष्टयति—मन्मना भव इति मय्येव न मदतिरिक्तपदार्थान्तरे मनो यस्य स मन्मनाः मय्येकस्मिन्मनसः सहजां-वृत्तिं स्वभाविकीं वृत्तिं कुर्वित्यर्थः। सैवैषानन्य-भक्ति शब्द शब्दिता परभक्तिशब्देनापि शब्द्यते "समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्। भक्त्या मामभिजानाति यावान् यश्चास्मि तत्वतः

---

यथार्थ होता है। और 'मयि बुद्धिं निवेशय' इस पद के बुद्धि की वृत्तिको हमारे आकार से ही आकारित करो इसी बात को "मन्मनाभव" इस पदसे स्पष्ट करते हैं कि हमारे अतिरिक्त अन्य पदार्थों में जिसका मन नहीं है यही "मन्मनाभव" इस का अर्थ हुआ अर्थात् अकेले मेरे में ही मनकी स्वाभाविक सहजावृत्ति को करो, इसी मनकी स्वाभाविक सहजावृत्ति को अनन्य भक्ति शब्दसे और पर भक्ति शब्द से भी कहते हैं। "समः सर्वेषु भूतेषु मद्भक्तिं लभतेपराम्" अर्थात् सब भूतोंमें जो सम है वह हमारी परम भक्ति को प्राप्त कर लेता है, भक्ति से ही भक्त हमको जितने जिस प्रकार यथार्थ रूपसे हम हैं वैसा जानता है इसके बाद यथार्थ रूपसे हमको जानकर हममें

ततो मां तत्वतो ज्ञात्वा विशते तदनन्त-रमि,, ति। कुतस्तयोः पर्यायत्व मिति चेत् "भ-क्त्यात्वनन्याशक्य अहमेवं विधोर्जुन, ज्ञातुं द्रष्टुं च तत्वेन प्रवेष्टुं च परंतप,, इति पर-भक्त्य नन्य भक्त्योरुभयोर्भगवद्याथात्म्य बोधक-त्व.द्येकधर्मकत्वोक्तेः तस्या एतस्या द्विविधानि साधनानि निर्दिष्टानि तत्रैकं तत्साधनप्रकारं

---

प्रविष्ट हो जाता है इन दोनों श्लोकोंमे मनकी स्वाभाविक वृत्ति पर भक्ति, अनन्यभक्ति इन तीनोंका एकार्थकत्व बतलाया।

अब सन्देह यह होता है कि अनन्यभक्ति और परभक्ति को एकार्थ प्रतिपादकत्व कैसे है। इसके उत्तरमें गीताचार्य, 'भक्त्यात्व नन्यया शक्यो' इस मंत्र से उत्तर देते हैं कि हे अर्जुन ! अनन्याभक्ति से ही हम इस प्रकारके हैं ऐसा जानने और देखनेमें आ सकते हैं और हे परंतप ! अनन्य भक्ति से ही हमारेमें यथार्थ रूपसे प्रवेश कर सकते हैं, इस मंत्र से परभक्ति और अनन्य भक्ति दोनों ही से भगवान् के यथात्म्य बोधकादि रूप एकधर्म कहा गया है।

अर्थात् इन्हीं दोनों से भगवान का यथार्थ बोध होता है। जब भगवत यथार्थ रूप बोधकत्व दोनों का फल है, तो दोनों में पर्य्यायत्व सिद्ध होता है।

इसके ( सहजावृत्ति ) दो प्रकार के साधन गीताचार्य ने निर्देश किया है। उसमें पहले साधन का प्रकार स्वे स्वे कमण्यं

स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नर इत्यारभ्य "ब्रह्म भूयायकल्पते" इत्यन्तेन संक्षेपतो निर्दिश्य स्व कर्मानुष्ठानेन शुद्धान्तःकरणस्याधिकारिणो ज्ञान योगानुष्ठानेना परोक्षी कृत प्रत्यगात्मनः परभक्तिप्राप्तिं प्रकाशयामास "स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु" इत्यारभ्य "यतः प्रवृत्तिभूतानां येन सर्वमिदं ततं स्वकर्मणा तमभ्यर्च्य सिद्धिं विंदति मानवः। सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे। समासेनैव कौंतेय निष्ठा ज्ञानस्य या परा बुद्ध्या विशुद्धया युक्तोधृत्यात्मानं नियम्य च शब्दादीन् विषयांस्त्यक्त्वा राग द्वेषौ व्युदस्य च। विविक्त सेवीं लघ्वासी यत वाक् काय मानसः। ध्यान योग

---

भिरतः यहां से लेकर ब्रह्म भूयाय कल्पते, यहां तक संक्षेप से निर्देश करके स्वकर्म के अनुष्ठान से अन्तःकरण की शुद्धि को बता करके ज्ञान योग के अनुष्ठान से परमात्मा के प्रत्यक्ष दर्शन बताया। और उन परमात्मा के प्रसाद से परभक्ति की प्राप्ति का "स्वकर्म निरतः सिद्धिं यथाविन्दति तच्छृणु" यहां से लेकर समःसर्वेषु भूतेषु मद्भक्तिं लभतेपराम्" यहां तक"

परोनित्यं वैराग्यं समुपाश्रितः। अहंकारं वलं दर्पं कामं क्रोधं परिग्रहं, विमुच्य निर्ममः शांतो ब्रह्म-भूयाय कल्पते। ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति। समःसर्वेषु भूतेषु मद्भक्तिं लभते परा,, मित्यन्तेन, यस्माच्च तयोर्नरयोः पर-भक्तिसाधनत्त्वेन निर्दिष्टयोः कर्म-योगज्ञानयोगयोरनुष्ठानप्रकारं प्रथम षट्के विस्तरेणोक्तोपदिश्य तदनुष्ठानसिद्धेभ्य आत्मसुखं प्राप्तेभ्योऽपि स्वभक्ति निष्टयोत्कर्ष्योक्तिद्वारा तान् भक्तियोगे प्रवर्त्तयितुं स्वभक्ति-योगमुपदिष्टवान् सप्तमारम्भ "योगिनामपि स-र्वेषां मद्गतेनांतरात्मने,, त्यादिभिस्तस्मादुप-

---

प्रकाशन किया है। अतः कर्मयोग, ज्ञानयोग, को परभक्ति का साधन निर्देश करके दोनों के अनुष्ठानके प्रकारको प्रथम छः अध्याय में विस्तार पूर्वक से कहा गया है, उसको बताकर ततः अनुष्ठान से सिद्ध आत्मसुख को प्राप्त जनों के लिये, अपने में भक्तिनिष्ठा के उत्कर्ष के कथन के द्वारा उनको भक्ति-योग में लाने के लिये अपने भक्ति योग का उपदेश भगवान ने, "योगिनांमपिसर्वेषाम्" इत्यादिक द्वितीय षट ६ से किया है

पद्यते कर्मयोगज्ञानयोगयोः परभक्तिसाधनत्वम् तत्र षष्ठोक्ताष्टांगयोगं कर्मयोगान्तर्गतं कर्मशिरोभूतं मन्यन्त एके, अन्ये तु तं ज्ञानसाधनत्वेन ज्ञानयोगं मन्यन्ते तत्र प्रथमः पक्ष एवमुपपद्यते। "अशोच्यानन्वशोचस्त्वमित्यारभ्य "एषातेभिहिता सांख्ये" इत्यंतेन ग्रंथेन प्रत्यगात्मविषयां बुद्धिमुपदिश्य बुद्धियोगे त्विमां शृणिवत्यारभ्य कर्मयोगविषयां बुद्धिमुपदिशन् कर्मानुष्ठानप्रकारः षष्ठाध्यायपर्य्यन्तेनोक्तो भगवता' अष्टांगयोगस्य कर्मयोग शिरस्कत्वे तदन्तंगतत्वात्

---

इससे कर्मयोग, ज्ञानयोग को परभक्ति का साधनत्व सिद्ध होता है। वहां प्रथम षट्कमे कहे गये अष्टांग योगको कर्मयोग के अन्तरगत कर्म के शिरोभाग को कोई मानते हैं, और कोई उस अष्टांग को ज्ञान का साधन होने से ज्ञानयोग मानते हैं. उसमें प्रथम पक्ष ही उपपन्न होता है, क्योंकि 'अशोच्यानन्व शोचस्त्वं, यहां से लेकर "ऐषाते भिहिता सांख्ये,, यहां तक के ग्रंथ से परमात्म विषयक बुद्धि का उपदेश करके "बुद्धि योगे त्विमाम शृणु" यहाँ से आरम्भ कर कर्म योग विषयक बुद्धि का उपदेश करते हुए भगवान ने षष्टाध्याय की समाप्ति तक कर्मानुष्ठान का प्रकार बताया है। इसलिये अष्टांग योग

योगारूढस्य तस्यैव शमः कारण-मुच्यते इत्याद्युक्तशमादीनामपि मनोनिग्रहा-द्यात्मकानां मानसव्यापारत्वेनांतःकरणकर्मत्त्वो-पपत्तेः । "तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दतीति कर्मयोगसंसिद्धस्याधिकारिणः तज् ज्ञानं स्वयं स्वतः प्रयत्नान्तरं विनैव लभते" इति-ज्ञानस्य योगफलत्वोक्त्या तदर्थकोपायानन्त-रानुष्ठानसूचनेनार्थतश्चशमादीनामपि कर्म-योगांतर्गतत्वोपपत्तेश्च ज्ञानस्य फलात्मकत्वेन

---

कर्म का शिरोभाग होने से कर्म योगान्तर्गत ही है । "योगारूढस्य तस्यैव' इत्यादि से कहे गये मनोनिग्रहादि रूप शमादिक मानस व्यापार होनेसे अन्तःकरणके कर्म हैं, अर्थात् कर्म दोप्रकार के होते है, बाह्यकर्म और आन्तरकर्म, बाह्य कर्म बाहरी इन्द्रियोंसे होते है, और आन्तर कर्म अन्तरेन्द्रिय मनके द्वारा होते हैं, अतः शमदमादिक मानस व्यापार होने से अन्तःकरण के कर्म है ।

"तत्स्वयं योग संसिद्ध" कर्म योग से संसिद्ध अधिकारी को उसका ज्ञान प्रयत्नान्तरके बिनाही प्राप्त हो जाता है । इस वचनसे योगका फल ज्ञान बताया गया है, उसके लिये उपा-यान्तरो के अनुष्ठानोका निषेध करनेसे अर्थ से भी शमादिक कर्मयोग के ही भीतर उपपन्न होते है । ज्ञान फलात्मक होन

तदनुष्ठानानुपपत्तेश्चेति। द्वितीयपक्षस्तु उक्त-रीत्यात्मविषयां कर्मयोगविषयां च बुद्धिमुपदिश्य "आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते इत्यन्तेन ग्रंथेन कर्मयोगानुष्ठान प्रकारञ्चोपदिश्यानन्तरं योगारूढस्य तस्यैव शमःकारणमुच्यते इत्यारभ्य षष्ठाध्याय पर्य्यन्तेन ग्रंथेन ज्ञानयोगानुष्ठानप्रकार उक्तः। ज्ञानयोगेनसांख्यानामिति निर्दिष्टस्य ज्ञानयोगस्यान्यत्रादृश्यमानस्य परिशेषादस्यैव योगप्रकरणस्य ज्ञानयोगप्रकरणोपपादकत्वात्। आरुरुक्षोः कर्मकारणमुच्यते इति आरुरुक्षोः कर्माधिका-

---

से उसका अनुष्ठान हो ही नहीं सकता है।

दूसरे पक्षमें कथित प्रकारसे आत्मविषयक और कर्मयोग विषयक बुद्धिका उपदेश करके "आरुरुक्षोर्मुनेर्योगं" इस ग्रंथ से कर्मयोग के अनुष्ठान का प्रकार बताकर उसके बाद "योगारूढस्य,, यहां से लेकर षष्ठाध्याय समाप्ति तक ज्ञानयोग के अनुष्ठान का प्रकार बताया है। "ज्ञान योगेन सांख्यानां" इस कर के बताया हुआ ज्ञानयोग दूसरी जगह देखा नहीं जाता है। अतः परिशेष से इसी योगप्रकरणको ज्ञानयोग प्रकरण मानते हैं। और 'आरुरुक्षोः' इससे आरुरुक्षु को ही कर्म का

रित्ववचनेन योगारूढस्य तदनधिकारित्व सूचनाच्च तेनैव योगारूढानुष्ठेयशमादीनां मानसव्यापारत्वेपि कर्मयोगान्तर्भूतत्वानुपपत्तेः। कर्मकारणमिति शमकारणमिति तद्विभाग करणाच्च। एकाकी अपरिग्रह इत्यादि विशेषणानां कर्मण्यनुपपत्तेश्च भगवत्समर्पितकर्मणामधिकफलकत्वोपपत्त्या। "नेहाभिक्रमनाशोस्ति प्रत्यवायो न विद्यते स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयादिति" किञ्चिदनुष्ठितस्यापि कर्मणः फलनाशश्रवणात् तत्त्यागजप्रत्यवायाभावश्रवणात् तस्यमहद्भयरक्षकत्वश्रवणाच्च

---

अधिकारी कहा गया है। योगारूढ कर्म का अधिकारी नहीं हो सकता यह सूचित किया है। अतः योगारूढ के अनुष्ठान करने योग्य शम दमादिक मानस व्यापार होने पर भी कर्मयोग के भीतर नही आ सकते, क्योंकि कर्म कारण और शम कारण ऐसे उनके दो विभाग किये हैं, एकाकी अपरिग्रह इत्यादिक विशेषण कर्म में उपपन्न ही नही हो सकते हैं। भगवत समर्पित कर्मोका अधिक फल कहने से और 'नेहाभिक्रमनाशोस्ति' इस मंत्रसे किंचित् अनुष्ठितभी कर्मके फलका नाश सुनाजाताहै, और उसके त्यागसे जायमान प्रत्यवाय का अभावभी बताया गयाहै.

निष्काम कर्मिणः इहामुत्रभ्रष्टत्वानु पपत्ते श्च। तदनुष्ठानपराणां कच्चिन्नोभयविभ्रष्ट इत्युक्तो भयविभ्रष्टत्वानुपपत्ते श्च। योगिनां कुले भव-तीत्यत्र संन्यासिनां कुलानुपपत्त्या अन्यथा सिद्धेन ब्रह्मलिङ्गेनाकाशप्राणादिश्रु ति वाधवल्लिङ्गेन योगीति श्रुतेर्बाधात् योगि शब्दस्ययोगशास्त्रविदि तदुपदेष्टरि धीमति ब्राह्मणे लक्षणोपपत्ते श्च। ज्ञानस्याननुष्ठेयत्वे-पि तदुपायानामनुष्ठानत्वोपपत्ते श्चेत्येव मुपपद्यते

---

और महद्भय से उसकी रक्षा भी बताई गयी है। निष्काम कर्म करने वाला पुरुष इस लोक और परलोक में भ्रष्ट नहीं होता है। और 'कच्चिन्नोभय विभ्रष्टः' इस मंत्रसे अनुष्ठान-कर्त्ता के उभयभ्रष्टत्व का निषेध किया गया है। "अथवा योगिनामेव कुलेभवति धीमताम्' यहांपर संन्यासीका कुल नहीं लिया जा सकता है। जैसे आकाश प्राणादि श्रुति का बाध होकर आकाश प्राण शब्दसे ब्रह्म लिये जाते हैं, उसी तरह से यहां पर भी लिङ्ग योगि से श्रुत का बाध होकर योगि शब्दसे योग शास्त्र को जानने वाला योगशास्त्र के उपदेष्टा बुद्धिमान ब्राह्मण में लक्षणा होती है। यद्यपि ज्ञान अनुष्ठेय नहीं है और उसके उपाय अनुष्ठेय हैं, तो भी जिस उपाय से ज्ञान हो

तथापि येनोपायेन सम्भवतुतेनैव प्रत्यगात्म प्राप्तिं प्रशान्त मनसं ह्येनं योगिनं सुखमुत्तमं। उपैति "शांत रजसं ब्रह्मभूतमकल्मषं सुखेन ब्रह्म संस्पर्शमत्यन्तं सुखमश्नुते,, इत्यादिनोक्त्वानंतरं "योगिनामपि सर्वेषां मद्गते नान्तरात्मना। श्रद्धावान् भजते यो मां समेयुक्त तमोमत इति वचनेन तेषां कर्मयोगिनां ज्ञानयोगिनां प्राप्तात्मनां बहुनामधेयः कश्चिन्मदगतेन

स ता है उसी उपाय से परमात्माकी प्राप्ति को 'प्रशान्तमनसं ह्येनं' इत्यादिक से कहकर 'योगिना मपिसर्वेषां' इस वचन से जिसका अर्थ यह है कि कर्मयोगी ज्ञानयोगी जिन्होंने आत्मा को प्राप्त कर लिया है उन बहुतों के मध्यमें जो कोई हमारे में मन को लगाकर श्रद्धापूर्वक मेरा भजन करता है। वह हमारे मत में सबसे उत्कृष्ट है। इस अर्थने दोनों योगों से सिद्ध हुए योगियों को भक्ति योग का अधिकारी बताकर और 'मय्यावेश्य मनाः' इस वचनसे भक्ति योग से ही हम यथार्थ से जाने जा सकते हैं। ऐसा निर्देश करके 'मनुष्याणां सहस्रेषु' इस वचन से ज्ञानयोग से आत्मा को जिन्होंने प्राप्त कर लिया है उनके मध्य में कोई ही हमको यथार्थ रूप से जानता है ऐसा कहकर 'योगिनामपि सर्वेषां' इस वचन से—उक्त ज्ञानयोग को वास्तविक स्फुट करके उसके आगे भक्तियोग वर्णन करनेसे आत्म-

मनसा श्रद्धा पूर्वकंमां भजते स युक्ततमः सर्वो-
त्कृष्टः मे मत इत्यर्थकेनोक्त योगद्वयसिद्धानां
भक्तियोगाधिकारत्वं निर्दिश्यमय्यासक्तमनाः-
पार्थ योगं युञ्जन्मदाश्रयः। असंसयं समग्रं मांय-
थाज्ञास्यसितच्छ्रृणिवति भक्तियोगस्य स्वसमग्रं
बोधकत्वं च निर्दिश्य मनुष्याणां सहस्त्रेषु कश्चि-
द्यतति सिद्धये यततामपि सिद्धानां कश्चिन्मामैति
तत्वतइत्यनेन सिद्धानां ज्ञानयोगेन प्राप्तात्मनामपि
मध्ये कश्चित्तत्वेन मां वेत्तीत्युक्त्या योगिनामपि
सर्वेषा मित्युक्ता अनन्यथा सिद्धेनोक्तेने ज्ञानस्य

ज्ञानी को ही भक्तियोग करने का अधिकार है। अतः कर्मयोग और ज्ञानयोग को ही परभक्ति का साधन माना गया है। यह एक प्रकार दिखाया गया।

अब द्वितीय साधन प्रकार दिखाते हैं। मन्मनाभव तथा मत्कर्मकृत" इत्यादि, उक्ति से हमारा भजन नमस्कार मद्विषयक कर्मादिक, निर्देश करके, मय्येव मन आधत्स्व" अथ चित्तं समाधातु" इत्यादिक मन्त्रों से साधन प्रकार बताया है इन श्लोकों में मच्चित्त समाधान पद से अनन्य भक्ति का ग्रहण है। उसके अनुष्ठान में असमर्थ के लिये उसके साधन भूत अपने कर्मों के करने का उपदेश दिया है। और वे कर्म भगवान के ध्यान पर्यन्त निर्दिष्ट हैं। और यहाँ उत्तरोत्तर साधनों के अनुष्ठान में

स्फुटीकृत्य तदग्रे भक्तियोगवर्णनेन च प्राप्ता-
त्माज्ञानस्य भक्तियोगाधिकारित्वस्फुटीकरणा-
दुपपद्यते । कर्मयोगज्ञानयोगयोः परभक्ति-
साधनत्वमित्येकस्तत्साधनप्रकारो दर्शितः ।
द्वितीयस्तत्साधनप्रकारस्तु "मन्मना भव मद्भक्तो
मद्याजी मां नमस्कुरु। मामेवैष्यसि युक्त्वैवमा-
त्मानं मत्परायणः" । तथा "मत्कर्म कृन्मत्परमो
मद्भक्तः संगवर्जितः । निर्वैरः सर्वभूतेषु यः समा-
मेति पाण्डव" इत्युक्तौ मद्य जनमन्नमस्कार मत्क-
र्मादिक इति निर्दिश्य "मय्येव मन आधत्स्व
मयि बुद्धिं निवेशय। निवसिष्यसि मय्येव अत
ऊर्ध्वं न संशयः॥ अथ चित्तं समाधातुं न शक्नोषि
मयि स्थिरम्। अभ्यासयोगेन ततो मामिच्छाप्तुं
धनञ्जय ॥ अभ्यासेप्यसमर्थोऽसि मत्कर्मपरमोभ-
वेत्यनेन स्फुटीकृतो भवति। तत्र मच्चित्तसमाधान
पदोक्तानन्यभक्त्यनुष्ठानासमर्थस्य तत्साधन-
त्वेन स्वकर्मपरत्वोपदेशात् । तच्च कर्म, स्वध्यान-
पर्य्यन्तं निर्दिष्टं । तत्रैवोत्तरोत्तरसाधनानुष्ठाना

समर्थस्य तत्पूर्वपूर्वसाधनानुष्ठानोपदेशपर वाक्ये "श्रेयोहि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते" इति स्वकर्मपदस्थाने ध्यानपद-प्रयोगात्। स्वकर्मपदस्य ध्यानपदस्य चानन्तरं कर्मफलत्यागपदप्रयोगाच्च "अथैतदप्यशक्तोसि-कर्तुं मद्योगमाश्रितः। सर्वकर्मफलत्यागं ततःकुरु-यतात्मवानिति", "ध्यानात्कर्मफलत्याग इति च। तस्मात्स्वानन्यभक्त्यनुष्ठानासमर्थस्य ध्यान-

असमर्थ प्राणी के लिये पूर्व २ साधनों के अनुष्ठान का उप-देश देनेवाले "श्रेयोहि ज्ञानमभ्यासात्" इस वाक्यमें स्वकर्म पदके स्थान में ध्यान पद का प्रयोग किया गया है। और स्व-कर्म पद और ध्यान पदके बाद "अथैतदप्यशक्तोसि०", 'ध्याना-त्कर्मफलत्यागः।...'' इन पदों से कर्मफलत्याग पद का प्रयोग किया गया है। अतः स्वानन्यभक्ति के अनुष्ठान में असमर्थके लिये ध्यान पर्य्यन्त स्वकर्म परत्व का उपदेश किया गया है इसीलिये यह मालूम पड़ता है कि भगवद्भजन नमस्कार आदिक अनन्यभक्ति के ही साधन हैं।

और उसी जगहपर स्वकर्म परत्व में असमर्थ के लिये निष्काम कर्म का उपदेश किया गया है और निष्काम कर्म को ही भगवत अर्चनादि साधन माना गया है।

अतः प्रथमषट्क से उपदिष्ट निष्काम कर्म के अनुष्ठान से शुद्धान्त करण भक्त के लिये भगवान् के भजन यजनादि के

पर्यन्तस्वकर्मपरत्वोपदेशात् भगवद्यजननमस्का-
रादीनामनन्यभक्तिसाधनत्वमवगम्यते । तत्रै-
व च स्वकर्म परत्वाऽसमर्थस्य निष्कामपर-
त्वोपदेशाच्च निःकामस्य कर्मणो भगवदर्चनादि
साधनत्वावगमात् । प्रथम षट्कोपदिष्टनिष्काम-
कर्मानुष्ठानेन शुद्धान्तःकरणस्य तद्यजनाद्यनुष्ठा-
नद्वारा तदनन्यभक्तिप्राप्तिरित्युपपन्नं भवति ।
यान्यत्र मत्कर्म पदेन सूचितानि अनन्यभक्तिसा-
धनानि तद्यजनश्रवणकीर्तनादीनि तानि नवमे
स्फुटमुक्तानि "महात्मानस्तु मां पार्थ दैवीं प्रकृति-
माश्रिताः । भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्य-
यम् ॥ सततं कीर्त्तयन्तो मां यतन्तश्च दृढव्रताः ।

अनुष्ठान द्वारा अनन्यभक्ति की प्राप्ति होती है। यह बात सिद्ध होती है। और जो यहाँ पर मत्कर्म पद से अनन्यभक्ति के साधन रूप भगवान् के यजन श्रवण कीर्तन आदिक सूचित किये गये हैं। वे सब नवम अध्याय में 'महात्मानस्तु माम्पार्थ' इत्यादिक वचनों से कहे गये हैं। अर्थात् हे पार्थ ! दैविक प्रकृति में स्थित महात्मा लोग हमको भूतादि, अव्यय जान कर अनन्यमन से भजते हैं, और सतत हमारा कीर्तन करते हैं, दृढ़व्रत होकर नित्य हमारे में यत्नशील होते हैं, हमको नमस्कार करते हैं, और नित्ययुक्त होकर भक्ति से हमारी उपासना

नमस्यंतश्च मां भक्त्या नित्ययुक्ता उपासते" इति एतद्वाक्यं सविशेषब्रह्मभक्तविषयमित्यनन्तर-वचनात्, ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते। एकत्वेनेत्यस्मान्निश्चीयते; तत्र ज्ञानयज्ञपराणा-मिव द्वादशोक्ताक्षरोपासनापराणां पूर्वश्लोको-क्तेभ्यः कीर्तनादिपरेभ्योऽन्यत्वोक्तेरिति एषां तच्छ्र-वणकीर्तनादिपराणां प्रत्यगात्मनः परमात्मन-श्चापरोक्षज्ञानं न षष्ठोक्तयोगपराणामिव द्वाद-शोक्ताक्षरोपासनापराणामिव क्लेशाधिकतर बहुसाधनसाध्यं, किन्तु ज्ञानयोगानुष्ठानं

---

करते हैं, यहाँ पर उपासक पद से सविशेष ब्रह्मभक्त को ही समझना चाहिये। यह बात 'ज्ञानयज्ञेन चाप्यन्ये' इत्यादि पद से निश्चय होता है, क्यों कि "ज्ञान यज्ञेन" इस पद में ज्ञान यज्ञ में परायणों के तरह से द्वादशाऽध्याय में उक्त अक्षरोपासना परायणों को "महात्मानस्तुमाम् पार्थ" इन श्लोकोंमें कीर्त्तनादि परों को पृथकतया निर्देश किया है। इन भगवच्छ्रवण कीर्त्तनादि परायण भक्तों को प्रत्यगात्मा और परमात्मा का अपरोक्ष ज्ञान अनायास से हो जाता है जिस प्रकार से षष्ठाध्यायोक्त योग परायणों की तरह द्वादशाऽध्यायोक्त अक्षरोपासना परायणों को क्लेशाधिक बताया गया है उसप्रकार भगवत् श्रवणकीर्त्तन

विनैवकेवलश्रवणकीर्त्तनस्मरणादिप्रसादितभगवदनुकम्पालभ्यमिति दशमवाक्यादवगम्यते। "अहं सर्वस्यप्रभवोमत्तः सर्वं प्रवर्त्तते। इतिमत्वा भजन्ते मां बुधा भावसमन्विताः॥ मच्चित्ता मद्गतप्राणाः बोधयन्तः परस्परम्। कथयन्तश्च मां नित्यं तुष्यन्तिच रमन्तिच॥ तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्। ददामि बुद्धियोगं तं येन मामुपयान्ति ते॥ तेषामेवानुकम्पार्थमहमज्ञानजं तमः। नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वतेत्येतस्मात्" एषां वचनानामक्षरोपासकविषयत्वं नोप-

---

परायण के लिये नहीं है किन्तु ज्ञानयोग के अनुष्ठान के विना ही केवल श्रवण कीर्तन स्मरणादि से प्रसन्न भगवान की अनुकम्पा से ही प्राप्त हो जाता है। यह बात १० वाँ अध्याय के निम्नांकित वाक्यों से अवगत होता है। मैं (भगवान्) ही सबका प्रभु हूं, मेरे से ही सबकी प्रवृत्ति होती है, ऐसा जानकर भाव समन्वित होकर विद्वान भक्त हमारा भजन करते हैं, हमारे में चित्त को लगाये है, हमारे में ही प्राण की वृत्ति लगाकर परस्पर में बोधन और मेरा कथन करते हुए नित्य सन्तुष्ट होते हैं और रमण करते हैं उन प्रीति पूर्वक भजन करने वाले सतत योगियों के लिये उस बुद्धियोग को मैं देता हूं जिससे वे सब हमको प्राप्त हो जाते हैं और उनके उपर अनुकम्पा के लिये अज्ञान से जायमान अन्धकार को अत्यन्त प्रकाशमान ज्ञानरूपी

पद्यते तेषामिति क्लेशप्रदैः स्वानुष्ठितसाधनैः प्रत्यगात्मज्ञानावाप्त्युक्तेः। पुनस्तेषां निरुपाधिकज्ञेयब्रह्मविचाराधिकारिणां "अहं सर्वस्य प्रभवे-त्युक्तस्य सर्वजगत्कारणस्य सोपाधिकत्वेन तदभिमतस्य प्रेमपूर्वकं भजनानुपपत्तेः। पुनश्च एकाकी यतचित्तात्मेति षष्ठोक्तज्ञानियोगपराणामेकाकित्वोक्त्या एकत्र बहुस्थित्यनुपपत्त्या बोधयन्तःकथयन्तःइत्युक्त बहुजनसाध्यतद्बोधन

---

दीप से आत्मा में स्थित होकर नाश कर देता हूं इन वचनों का अक्षरोपासक विषयकत्व कथमपि उपपन्न नहीं हो सकता, क्यों कि उन ज्ञानियों के लिये क्लेशप्रद स्वानुष्ठित साधनों से प्रत्यगात्मज्ञान की प्राप्ति बताई गई है, और वे अव्यक्तोपासक ज्ञानियों के निरूपाधिक ज्ञेय ब्रह्म विचार का ही अधिकार है अतः उनके लिये "अहं सर्वस्य प्रभवः" इस पद से कहे गये सर्व जगत् कारण उनके मत में स्वोपाधिक होने से प्रेम पूर्वक भजन बन ही नहीं सकता क्यों कि वे तो निरुपाधिक ब्रह्म को ही ज्ञेय समझते हैं और यहाँ पर ब्रह्म सर्व जगत् कारण होने से स्वोपाधिक है अतः उनके भजनार्ह है।

द्वितीय अनुपपत्ति एक यह भी है कि "एकाकीयत चित्तात्मा" इस षष्ठाध्याय के वचन में ज्ञानयोगपरायण के लिये एकाकी रहने का उपदेश है एक जगह बहुतों की स्थिति हो

कथनाद्यनुपपत्तेश्च। तद्बोधनकथनमात्रेण तत्तोष-त्वरमणत्वानुपपत्तेश्च। पुनश्च द्वादशे 'तेषामहं समुद्धर्त्ता','भवामि न चिरात्पार्थ',इत्यस्य व्याख्याने भाष्यकृता श्रीशंकरेण यद्भगवदाधीनमुक्तिमत्त्वेन तद्भक्तेभ्यः स्वाधीनमुक्तिमत्वेनाक्षरोपासकाना-मुत्कृष्टत्वं प्रतिपादितं यत् तद्विरोधाच्च । तत्कुतः इतिचेत् अत्र भगवद्दत्तज्ञानेनात्मप्राप्त्यास्मि कायास्तन्मुक्तेः पराधीनत्वोपपत्तेरिति तदेत-च्छ्रवणकीर्तनादिप्रसादितभगवद्दत्तप्रत्यगात्म-

नहीं सूझती अतः बोधयन्, कथयन्, यह बहुजन साध्य होनेसे ज्ञानयोग परायण का बोधन कथन नहीं बन सकता किन्तु भग-वत् श्रवण कीर्तन निष्ठ भक्त के लिये ही हो सकता है । और ज्ञानयोग पर को बोधन और कथन मात्र से तोष और रमन भी नहीं हो सकता है यह तो भक्त के लिये ही होता है क्यों कि भक्त भगवान् के चरित्र श्रवण कीर्तनादि से परम सन्तोष को प्राप्त होते हैं । यदि ज्ञानयोगी और भक्तों का भेद नहीं पावेंगे तो द्वादशवें अध्याय में, 'तेषामहं समुद्धर्त्ता', 'भवामि नचिरा-त्पार्थः" इन मंत्रोंके व्याख्यान में भाष्यकार श्रीशंकराचार्य ने भगवान्के अधीन मुक्ति वाले भक्तों की अपेक्षा स्वाधीन मुक्ति वाले अक्षरोपासकों को उत्कृष्ट बताया है, उसे विरोध पड़ जायगा । यह कैसे विरुध है यह अगर पूछ तो वह इस प्रकार से है कि भक्तों के लिये भगवान् से दिये हुए ज्ञानसे आत्म-

षयं ज्ञानमनन्यभक्तिपूर्वकालीनं, परमात्म विषयबोधरूपन्तु तदुत्तरकालीन मिति अनन्य भक्तिसमानार्थकपरभक्ति परात् 'ब्रह्मभूयाय-कल्पते', 'ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति', 'समःसर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥ भक्त्या मामभिजानात्येनस्माद्वचनादवगम्यते। एतस्मिन्वाक्ये परभक्तिपूर्वकालीनस्य प्रत्यगात्म-ज्ञानस्य तदुत्तरकालीनस्य परमात्मयाथात्म्य-बोधस्य च स्फुटं प्रतीतेः। तथाच "भक्त्यात्वनन्य-याशक्यअहमेवं विधोऽर्जुन। ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप" इत्यनन्य भक्तेरप्युत्तर

---

प्राप्ति रूपा मुक्ति भक्त को मिलती है, अतः मुक्त को पराधीन कहा गया है इससे श्रवण कीर्तन से प्रसन्न हुए भगवान् से दिए हुए प्रत्यगात्म विषय ज्ञान अनन्य भक्तिपूर्वक होता है और परमात्मक विषय के बोधरूप ज्ञान उसके बाद मिलता है यह बात अनन्यभक्ति समानार्थक पर भक्तिपर "ब्रह्मभूयाय कल्पते" इत्यादि वाक्योंसे जाना जाता है। क्योंकि इन वाक्योंमें पहले परभक्ति पूर्वक प्रत्यगात्म विषयक ज्ञान होता है और उसके बाद परमात्मविषयक यथार्थ बोध होता है यह स्पष्ट है।

'तथा च भक्त्यात्त्वनन्याशक्य' इस मंत्र से अनन्यभक्ति के भी उत्तर कालमें परमात्माका यथार्थ बोध होता है। यह

काले परमात्मयाथात्म्यबोधाद्युक्तेः परभक्तिसमानार्थकत्वावगत्या अस्या अपिपूर्वकालीनत्वे प्रत्यगात्मज्ञानस्यावश्यं भाव्यमित्युपपन्न मनन्य भक्तिपरभक्त्योर्द्वयोरपिकर्मज्ञानोत्तरकालीनत्वेन तदनुष्ठानसाध्यत्वं तथा फलतश्चैक्यं तयोर्द्वयोर्भगवत्तत्वयाथात्म्यबोधकत्वाद्येक फलकत्वात् । एतावांस्तु तत्र विशेषोस्ति परभक्तिपूर्वकालीनं तत्साधनभूतं प्रत्यगात्मज्ञानं ज्ञानयोगसाध्यं तात्साधनकोटावहंकारकामक्रोधादित्यागश्रवणादतोदुष्करं तत् अक्षरोपासकानां दुःखबाहुल्य-

---

कहने से परभक्तिके सामानार्थक का ज्ञान होने से परभक्ति के पूर्वकाल में होने पर भी प्रत्यगात्मज्ञान अवश्य हो सकता है यह सिद्ध होता है अतः अनन्यभक्ति और परभक्ति दोनों को ही कर्म और ज्ञान के उत्तर कालीनत्व होने से उन दोनों के अनुष्ठान से साध्यता बताई गई। और फल से भी उन दोनों को भगवत्तत्व का यथार्थ बोध होने से और एक फलवाले होने से दोनों में ऐक्य है परंच इतनी विशेष बात है कि परभक्ति के पूर्व में होने वाला परभक्ति का साधनभूत प्रत्यगात्मा का ज्ञान योगसाध्य है और उसकी सधान कोटि में अहंकार काम-क्रोधादि का त्याग सुना जाता है इसीलिये ज्ञानयोग अक्षरोपासकों के लिये दुष्कर बताया गया है। और उसमें दुःखबाहुल्य

प्राप्त्युक्तेः "क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसामिति" अनन्यभक्तिपूर्वकालीनं प्रत्यगात्मज्ञानं तु श्रवणादिप्रसादितपरमात्मानुकम्पालभ्यं "तेषामेवानुकंपार्थमहमज्ञानजंतमः। नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वतेत्युक्तेस्तः सुकरं तत्; तत्साधनज्ञानयोगानुष्ठानं विनैव तल्लब्धेःश्रवणादीनामपि सुकरत्वात्। कुतःएकत्र परमात्मनः प्रसादाधिक्यमन्यत्र तदभावइतिचेत् तदीयसाधनानामहंकारत्यागादीनां प्रत्यगात्मप्रयोजनकत्वात्। श्रवणादीनान्तु केवलं पर-

भी कहा गया है क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसां ।" अव्यक्तासक्त चित्तोंको क्लेश अधिक होता है। इति

और अनन्यभक्तिके पूर्वकालीन प्रत्यगात्मज्ञान श्रवणादि से प्रसन्न परमात्मा के अनुकम्पा से प्राप्त होता है। क्योंकि हे अर्जुन! उनके अनुकम्पा के लिये आत्मभावस्थ होकर के मैं प्रकाशयुक्त दीप से अज्ञानरूपी अन्धकार को नाश कर देता हूँ यह भगवान की प्रतिज्ञा है अतः वह सुकर है। और उसका साधन ज्ञानयोग के अनुष्ठान के विनाही उनकी प्राप्ति हो-जाती है। अतः श्रवणादिक भी सुखपूर्वक हो सकते हैं।

अब सन्देह यह होता है कि एक जगह परमात्मा का प्रसाद अधिक है और दूसरी जगह प्रसाद नहीं है सो क्यों

मात्माविषयकत्वात् । एतदुक्तं भवति ज्ञानयोग-निष्ठः कर्मानुष्ठानकृतान्तःकरणशुद्धिकालमारभ्य यावत्कालेन प्रत्यात्म प्राप्तिः तावत्कालं प्रत्यगात्म-ज्ञानार्थं तत्साधनान्यनुतिष्ठति ध्यायति च तमेव न तु परमेश्वरप्राप्त्यर्थं किञ्चित्करोति न च तं ध्यायति ज्ञानयोगप्रकरणे अक्षरोपासनाप्रकरणे च प्रत्यगात्मचिन्तनभिन्नतयापरमात्मध्याना-श्रवणात् किन्तु चतुर्विधा भजन्ते मामित्यत्र

इसका कारण यह है कि ज्ञानयोग के साधन अहंकारादिकों का त्याग प्रत्यगात्मबोध का प्रयोजक होता है। और अहंकारादिकों का त्याग अत्यन्त दुष्कर है और अनन्यभक्ति में साधन भूत श्रवणादिक हैं जिन श्रवणादिकों का विषय केवल परमात्मा ही है अतः श्रवणादिनिष्ठ अनन्यभक्तिमान् पुरुष के ऊपर परमात्मा की अधिक कृपा है। और ज्ञानयोग साधन में केवल भगवद्विषय न होने से भगवान् की अनुकम्पा नहीं होती इसका मतलब यह होता है कि ज्ञानयोगनिष्ठ पुरुष कर्मों के अनुष्ठानसे अन्तःकरण की शुद्धि अब कर लेता है तबसे लेकर जबतक प्रत्य-गात्मकी प्राप्ति नहीं हो जाती तबतक प्रत्यगात्मकज्ञानके लिये साधनों का अनुष्ठान करता रहता है और उसीका ध्यान भी करता है परमात्मा की प्राप्ति के लिये न तो कुछ करना ही है और न परमात्मा का ध्यान ही करता है, क्योंकि ज्ञान-

जिज्ञासोरथात्म साधनत्वेन परमात्मभजनश्रवणा-त्तेषां योगनिष्ठानां मध्ये कश्चित्परमात्मानमपि भजते तदध्यात्मसाधनत्वेन नतु साध्यत्वेनातः परमात्मापि तद्भजनानुसारेण तदात्म प्राप्तिसाहाय्यं करोति नतु स्वयं तत्संपादयति आत्मप्राप्त्यनंतरं तु सोपि "वासुदेवः सर्वमिति" ज्ञानवान्भूत्वा परभक्त्या भगवन्तं भजते तत्प्राप्त्यर्थमतः सोपि-भगवत्प्रीतिविषयः तच्छ्रवणकीर्तनादिनिष्ठस्तु

---

योग प्रकरण में और अक्षरोपासना प्रकरण में प्रत्यगात्मचिन्तन से भिन्न परमात्मा का ध्यान नहीं कहा गया है। किन्तु "चतुर्विधाभजन्तेमां" यहां पर जिज्ञासु के लिये आत्म साधन रूप से परमात्मा का भजन श्रवण नहीं किया गया है, तो भी यदि कोई ज्ञानयोगनिष्ठों के मध्यमें से परमात्मा का भजन भी करता है तो आत्मसाधनबुद्धिसे ही करता है साध्य बुद्धि से नहीं इसलिये परमात्माभी उसके भजनके अनुसारही आत्मप्राप्ति की सहायता मात्र करते हैं स्वयं उसका सम्पादन नहीं करते आत्म प्राप्ति के बाद वह भी तो वासुदेवः सर्वमिति ऐसा ज्ञान वाला होकर पर भक्ति से परमात्मा के प्राप्ति के लिये परमात्मा का भजन करता है। अतः वहभी भगवान् की प्रीतिका पात्र होगा।

निष्काम कर्मानुष्ठानजान्तःकरणशुद्धिकालमा-
रभ्य यावद्भगवत्प्राप्तिस्तावत्कालं केवलं परमेश्वर-
मेव भजते तदपि तत्प्राप्त्यर्थमेव ततः तस्यश्रवणा-
दिविषयः परमेश्वरः साधनभूतः अनन्यभक्ति-
विषयस्तु स एव तत्प्राप्यभूतोयस्मात् तस्मात्
साधनभूतश्रवणादिविषयः परमात्मापिसाध-
नत्वं प्राप्तः आत्मज्ञानं विना परमात्मज्ञानस्यानु
पपद्यमानत्वात् स्वयं तत्साधनीभूय प्रथममज्ञान-
जतमोनाशद्वाराप्रत्यगात्मस्वरूपं प्रकाशयति प-
श्चात्तज्जन्यस्वानन्यभक्तिलाभद्वारापरमात्मयाथात्म्य

---

श्रवण कीर्तनादिनिष्ठ भगवद्भक्त निष्काम कर्मके अनुष्ठा-
न करनेसे जिस कालमें उसका शुद्ध अन्तः करण हो जाता
है उस काल से लेकर जबतक भगवानकी प्राप्ति नहीं होती
तबतक केवल परमेश्वर का भजन करता है और यह भजनभी
परमात्मा के प्राप्ति के लियेही करता है अन्य अभिलाषासे नहीं
इसे श्रवण कीर्तनादिनिष्ठ भगवद्भक्त के किये गये श्रवणादि
के विषय परमेश्वरही हैं साधनभूत अनन्य भक्तिके विषयभी
वही हैं और प्राप्यभूत भी वही हैं इसलिये साधन भूत श्रवणादि
के विषय परमात्मा ही साधनभाव को प्राप्त होगये । आत्मज्ञान
के विना परमात्मज्ञान हो नहीं सकता अतः परमात्माही स्वयं
उसके साधन होकर पहले अज्ञान से जायमान अंधकार को

स्वरूपं चेति । एतदेवैताभ्यामुच्यते "तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् । ददामि बुद्धि योगं तं येन मामुपयान्ति ते । तेषां मेवानुकम्पार्थ महमज्ञानजं तमः । नाशयाम्यात्म भावस्थो ज्ञान दीपेन भास्वतेति" अत्रैषारीतिः ज्ञानदीपशब्दनिर्दिष्टबुद्धियोगं विना । अथवा बुद्धियोगशब्दोक्तज्ञानदीपं विनाज्ञानजतमोनाशः न च तं विनाप्रत्यगात्मप्राप्तिः न च तां विना भगवत्प्राप्तिरिति परंपरया ज्ञानदीपस्य स्वप्राप्ति-

---

नाश कर प्रत्यगात्मक स्वरूप का प्रकाशन करते हैं उसके बाद उससे जायमान स्वानन्यभक्तिलाभके द्वारा परमात्मा के यथार्थ स्वरूप को प्राप्त होता है यही बात आगेके दो मन्त्रोंसे बताई जाती है। यही बात तेषां सतत० तेषामेवा० इन दोनों मंत्र से बताई जाती है। यहांपर पौर्वापर्य भाव माना गया है ज्ञान दीप शब्द से निर्दिष्ट बुद्धि योग के विना अथवा बुद्धि योग शब्दोक्त ज्ञान दीप के विना अज्ञानसे जायमान अंधकार का नाश नहीं होसकता और अंधकार के नाश के विना प्रत्य गात्म की प्राप्तिभी नहीं होसकती और प्रत्यगात्मप्राप्तिके विना भगवत् प्राप्ति भी नहीं होसकती इस प्रकार परम्पर से ज्ञानदीप को अपनी प्राप्तिका साधन मानकर भगवान् कहते हैं येन

साधनत्वमंगीकृत्याह 'येन मामुपयान्ति ते' इति वस्तुतस्तु अनन्ययैव भक्त्या तत्प्राप्तिरुक्ता भक्त्यात्वनन्यया शक्यो ज्ञातुं, भक्त्या मामभिजानातीति च अथवा बुद्धियोगशब्देनानन्यभक्त्युत्तरकालीनः परमात्मयाथात्म्यबोध उक्तस्तदनन्तरं तत्प्राप्त्युक्तेः "ततो मां तत्वतो ज्ञात्वा विशते। इति" तत्र तत इति न ज्ञानमुच्यते ज्ञानेन पुनस्तज्ज्ञानानुपपत्तेः किन्तु तच्छब्देन भक्तिः परामृष्टा तयैव तत्तत्वज्ञानपूर्वकं तत्प्रवेशो-

---

मामुपयान्ति तो जिससे वे हमको प्राप्त होजाते हैं।

वास्तवमें तो अनन्य भक्ति से ही परमात्मा की प्राप्ति "भक्त्या त्वनन्य याशक्यो, भक्त्या मामभि जानाति" इन वचनों से कही गई हैं अथवा यहाँ पर बुद्धियोग शब्दसे अनन्य-भक्ति के उत्तर काल में होनेवाला परमात्मा का यथार्थ बोध कहा गया है उसके बाद परमात्माकी प्राप्ति होती है, क्योंकि, "ततो मामृतत्वतो ज्ञात्वा" इसके बाद हमको यथार्थतया जानकर हमको प्राप्त हो जाता है।

अब शंका यह होती है कि ततः पद से किसको लेना चाहिये ततः इस पद से ज्ञान नहीं लिया जासकता है क्यों कि ज्ञान के बाद पुनः ज्ञानकी प्राप्ति नहीं हो सकती है। अतः यहां तत् शब्द से भक्ति का ही परामर्श होगा क्यों कि भक्ति

पपत्तेः । भक्त्यात्वनन्यया शक्योऽहमेवं विधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्वेन प्रवेष्टुं च परंतप इत्यत्र स्फुटं भक्तेरेव तज्ज्ञापकत्वं तत्प्रवेशकत्वोक्तेः।द्या स च तत् याथात्म्यबोधः तदज्ञाननाशं विना कथमुत्पद्येतेत्यपेक्षायांमाह अहमज्ञानजं तम नाशयामि इति । ततस्तु अज्ञानजंतमोनाशानन्तरं प्रत्यगात्मप्राप्तिस्ततोऽनन्यभक्त्या तद्याथात्म्य बोधानन्तरं तत्प्राप्तिरिति ध्येयं । तदेवमुक्तयोर्द्वयोरपिभक्त्योर्मध्येऽनन्यभक्तिप्रत्य स्थतपक्ष

---

से ही भगवत् तत्वज्ञान पूर्वक भगवान में प्रवेश हो सकता है क्योंकि "भक्त्या त्वनन्यया शक्यः" इस मंत्रमें स्पष्टतया भक्ति कोही भगवद्‌बोधकत्व भगवत्प्रवेशकत्व बताया गया है। और वह भगवद्याथात्म्य बोध अज्ञान के नाशके विना कथमपि उत्पन्न नहीं होसकता है इसी लिये अज्ञान नाश के लिये परमात्मा ने स्वयं प्रतिज्ञा की "अहमज्ञानजन्तमः नाशयामि" अर्थात् मैं अज्ञान से जायमान अंधकारको नाश कर देता हूँ इसके बाद अज्ञानज अन्धकार के नाश के बाद प्रत्यगात्म की प्राप्ति और उसके बाद अनन्य भक्ति से परमात्मा का यथात्म्य बोध और बोध के बाद परमात्मा की प्राप्ति होती है ऐसा जानना चाहिये

तदेवं इस प्रकार से उक्त दोनों भक्तियों के मध्य में अन-

पातित्वोपपत्तेः परमेश्वरस्य तस्याः समस्तगीता-शास्त्रसारत्वनिश्चयेन गीताशास्त्रमूलभूतवेद सार त्वेनानुमिता एषैव भक्तिरनुष्ठेया भगवत्प्राप्त्य भीप्सुभिर्मुमुक्षुभिः। भगवता सर्वज्ञेन स्वकण्ठतोऽस्याः सप्ताधनायां अनन्यभक्तेः। समस्तगीताशास्त्रगुह्यतमत्वोक्तिपूर्वकं स्वप्राप्त्य-व्यभिचारिसाधनत्वप्रतिज्ञापूर्वकं शास्त्रस्योप-संहराच्च "सर्वं गुह्यतमं भूयः शृणु मे परमं वचः। इष्टोसि मे दृढमिति ततो वक्ष्यामि तेहितं ॥ मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु। मामे-

---

न्य भक्ति के प्रति भगवान का पक्षपात सिद्ध होता है और यही अनन्यभक्ति समस्त गीताशास्त्र का सार है, गीता-शास्त्र का मूल भूत जो वेद उनका भी यही सार है यह निश्चय होता है। अतः भगवत् प्राप्ति के अभिलाषी मुमुक्षुओं को चाहिये कि इसी भक्ति का अनुष्ठान करें और सर्वज्ञ भगवान श्री कृष्णजी ने अपने कंठ से ही साधन के सहित इसी अनन्यभक्ति को समस्त गीताशास्त्र का गुह्यतमत्व कहकर यह बताया है कि अपनी प्राप्ति का अव्यभिचारी साधन अनन्यभक्ति ही है ऐसा कहकर "सर्वगुह्यतमंभूयः" इत्यादि वचनों से शास्त्र का उपसंहार किया है इसे अनन्यभक्ति कोही भगवत्प्राप्ति का परम श्रेष्ठ सुकर उपाय सिद्ध होता है। "मन्मनाभव" इस मंत्र

वैष्यसि सत्यन्ते प्रति जाने प्रियोऽसि मे" इति। अत्र मन्मनाःइत्यनेन स्वानन्यचित्तत्वं च मयि भक्ति-रनुरक्तिर्यस्य स मद्भक्त इत्यनेन स्वैकानुराग-वत्वंतु निर्दिश्य पदद्वयेन स्वानन्यभक्तिरुक्ता। मद्याजी मां नमस्कुर्विंतिद्वाभ्यांतु श्रवणा दिका साधनभक्तिरुक्ता। यद्यप्यत्र यजन-पदस्यैव श्रवणाद्युपलक्षकत्वान्नमस्कारपदं निरर्थकं तथापि त्यागस्यापि यजनपदार्थक त्वेन तत्र तदतिव्याप्तिमाशंक्यतन्निवृत्यर्थकं नम स्कारपदं स्वसहचरितभगवत्पूजार्थकत्व यजन

में मन्मनाः इस पद से स्वानन्य चित्त हो यह बतायाजाता है हमारे में है अनुरक्ति जिसकी वह मद्भक पद से कहा गया है उपरोक्त विग्रह से मद्भक पद का हमारे में ही एक अनुरागवान का निर्देश करके दोनों पदों से स्वानन्यभक्ति कही गई, और "मद्याजीमां नमस्कुरु" इन दोनों पदों से श्रवणादि रूपा साधन भक्ति कही गई। यद्यपि यहाँपर यजन पद ही श्रवणादि का भी उपलक्षक है नमस्कार पद निरर्थक है तौभी यजन पद से त्याग का भी ग्रहण हो जायगा उसे अतिव्याप्ति के वारण करने के लिये नमस्कार पद है, और वह यह सूचित करता है कि नमस्कार सह चरित भगवान का पूजन करना चाहिये।

पदस्य सूचयति । किञ्च मां यष्टुं शीलमस्येति मद्याजीति निरुक्त्या साक्षाद्भगवद्यजनवाचकस्य तत्साक्षात्पूजार्थकत्वोपपत्त्या बहुदेवताकयागस्य तन्नैमित्तिकयागस्य वाचकत्वानुपपत्तेस्तद्यजनपदस्यैव श्रवणाद्युपलक्षकत्वोपपत्तेः । नमः पदमुपायवाचकं मामुपायं कुर्वित्यर्थः । साधनान्तरसंत्यागो नमः शब्दो हि संशतीति पंचरात्रोक्तेः । तेन कर्मज्ञानाद्युपायान्तरपरित्यागपूर्वकं मामेकमुपायं कृत्वा मद्यजनादिपरः सन्मदनन्यभक्त्युक्तमदेकानुरक्तचित्तो भवेति सूचितं

---

किंच "माम् यष्टुं शीलमस्य इति मद्याजी" हमारे यजन करने का है शील स्वभाव जिसका उसको मद्याजी कहते हैं। इस निरुक्ति से साक्षात् भगवान के यजन वाचक साक्षात् भगवान का पूजा करना यह सिद्ध होता है, बहुत देवताओंवाले याग का और नैमित्तक याग का यजन पद को वाचकत्व कथमपि नहीं हो सकता। इसलिये यजन पद श्रवणादि का उपलक्षक है, और नमः पद उपाय वाचक है अर्थात् माम् नमस्कुरु का अर्थ होता है कि हमको उपाय बनाओ। क्योंकि पंचरात्र में नमःशब्द का अर्थ बताते हुये यह कहा है कि नमः शब्द साधनान्तरों का त्याग बताता है। अतः कर्म और ज्ञानादिक उपायान्तरों को परित्याग कर हमको ही उपाय करके हमारा यजन करते हुए एक हमारे में ही अनुरक्त चित्त होवो यह

भवति। सर्वगुह्यतमोक्त्याप्यस्यैवार्थस्य सूचनात उपायान्तरापरित्यागे सर्वगुह्यतमोक्तौ वैयर्थ्योपत्तेरिति सैषा "अनन्यचेताः सततं यो मां स्मरति नित्यशः। तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः॥ अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते। तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहमित्याद्युक्ता मन्मना भव मद्भक्त इति निर्दिष्टा चानन्य भक्तिः सविशेषब्रह्मपरा निर्विशेषब्रह्मपरा वेत्याशंकायां सविशेषब्रह्मपरेति ब्रूमः। कुतः ? मद्याजी, मां नमस्कुरु, मत्कर्मकृदित्युक्तानां भगवत्पूजानमस्कारादिभक्तिसाधनानां निर्विशेषाक्षरोपास

---

सूचित होता है। "सर्वगुह्यतम" से भी यही अर्थ सूचित होता है। यदि उपायान्तरोंका परित्याग न किया जाय तब तो सर्व गुह्यतमत्व का कहना ही व्यर्थ हो जायगा यही अन्यभक्ति "अनन्य चेता सततं" इत्यादिक मूलोक्त दो श्लोकोंमे कही गई है।

अब सन्देह यह होता है कि यह अनन्य भक्ति सविशेष ब्रह्म विषया है अथवा निर्विशेष ब्रह्म विषया है। उत्तर करते हैं कि नहीं सविशेष ब्रह्म विषया है क्योंकि भगवत् पूजा नमस्का-

नाप्रकरणे ज्ञानयोगप्रकरणे चाश्रवणात्
स विशेष ब्रह्मभक्तिप्रकरणे तु सहस्रशस्तछ्र-
वणात् । प्रकरणस्यार्थ नियामकत्वात् । अन-
न्यचेताः सततं यो मां स्मरतीत्यस्य तु मूर्द्धन्यया
नाड्योत्क्रमवतामर्चिरादिमार्गेण· गत्वा सविशेष
ब्रह्म प्राप्त्युक्तेः । निर्विशेष ब्रह्मप्राप्तिवादिनां
त्व मूर्द्धन्या देहान्निर्गत्यार्चिरादिना निर्विशेष
ब्रह्म प्राप्ते रसम्भ मद्याजिनापि नाड्यो क्रमतां
प्रकरणे श्रवणादुपपद्यते सविशेब्रह्म परत्वं ।

रादि भक्ति साधनों का निर्विशेष ब्रह्मोपासना प्रकरण में और ज्ञान योग प्रकरण में श्रवण नहीं है सविशेष ब्रह्म भक्ति प्रकरण में तो उपरोक्त साधनों का सहस्रशः श्रवण है प्रकरण ही अर्थ का नियामक होता है अतः यह निश्चय होता है कि अनन्य भक्ति सविशेष ब्रह्म विषया है। "अनन्य चेताः सतत" इस मंत्र से मूर्द्धन्य नाड़ी से उत्क्रमण करने वाले अर्चिरादि मार्ग से जाकर सविशेष ब्रह्मको प्राप्त होते हैं, यह कहा गया है और निर्विशेष ब्रह्म प्राप्ति वादियों के लिये मूर्द्धन्य नाड़ी से भिन्न नाड़ी से देह से निकलकर अर्चिरादि मार्ग से निर्विशेष ब्रह्म की प्राप्ति असम्भव है। हमारे यजन करने वाले के लिये भी मूलनाडी से उत्क्रमण करने वालेको प्रकरण में श्रवण होने से सविशेष ब्रह्म की प्राप्ति होती है।

किञ्च स्मरति ध्यायत्योः पर्यायत्वात् । ध्यान विषयस्य ध्येयस्य सविशेषत्वोपपत्तेः । तेषां ज्ञेयब्रह्मविचारपराणां भगवद्भक्तोपास्यत्यक्त ध्येयब्रह्मस्मरणानां तत्स्मरणानुपपत्तेश्च तस्य तत्परत्वमेवोपपद्यते । अनन्याश्चिन्तयन्तो मामितीदं वाक्यं तु निर्विशेषवादिभिर्विशेष ब्रह्मोपासकपरत्वेन नीत्वा स्वयोगक्षेमव्यापाररहितस्य ज्ञानिनः ऐहिकयोगक्षेमौ परमेश्वर एव करोतीत्युपपादितं तदपि नोपपद्यते तत्पूर्वापरवाक्यविरोधो तदुक्तयोगक्षेमपदयोः ऐहिकार्थ

स्मृ धातु और ध्यै धातु में एकार्थकत्व होने से ध्यान का विषय जो ध्येयहै, वह सविशेष ही होसकता है और च ज्ञेय ब्रह्म के विचार करने में तत्पर ज्ञानियों को भगवत भक्तके उपास्य ध्येय ब्रह्म को स्मरण करने वाले निर्विशेष वादिया को भगवान का स्मरण उपपन्न नहीं होसकता । किन्तु ध्येय ब्रह्म का स्मरण ध्याता भक्तको ही होसकता है, अनन्याश्चिन्तयन्तमाम्'' इस वाक्य को निर्विशेष ब्रह्मवादियों ने सविशेष ब्रह्म विषयक उपासना परक मानकर अपने योग क्षेमके व्यापार से रहित ज्ञानिके लिये ऐहिक योगक्षेम परमेश्वर ही करते हैं यह प्रतिपादन जो किया है वहभी उपपन्नहीं होसकता, पूर्वा पर वाक्य का विरोध है और निर्विशेष ब्रह्मवादियोंके मतमें योग क्षेम पदका

परत्वानुपपत्तेःकुतः । तत्पूर्वतनस्य "त्रैविद्या मांसोमपाः पूतपापा यज्ञैरिष्टा स्वर्गतिं प्रार्थयन्ते। तेपुण्यमासाद्य सुरेन्द्रलोकमश्नंति दिव्यान् दिवि देवभोगान् ॥ ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणेपुण्ये मर्त्यलोकं विशंति। एवं त्रयीधर्ममनुप्रपन्नागतागतं कामकामालभन्ते, इत्यस्य सकामयागानुष्ठाननिष्ठपरलोक गतिवर्णनपरत्वात् । तदुत्तरतनस्यं च "येप्यन्यदेवताभक्ता यजंते श्रद्धयान्विता" इत्यारभ्य, नतुमामभिजानंति तत्वेनातश्च्यवन्ति । ते देवान् देवयज्ञो यांति त्यन्तस्य वाक्य स्य देवता न्तरभक्त परलोकगतिवर्णनपरत्वात् तन्मध्य

---

थैहिकार्थ करनाभी अनुपपन्न है। क्योंकि उसे पूर्व तन "त्रयीविद्या माम् सोमपान" इत्यादि वाक्य सकाम याग का अनुष्ठाः करने वाले के लिये परलोक गति का वर्णन किया गया है। और उसके बाद उत्तर वाक्य मे येप्यन्य देवता भक्ता" इससे आरंभ कर देवान् देव यज्ञोयन्ति यहां तक के वाक्यमे देवतान्तर भक्त का पर लोक गति वर्णन किया जाता है और दोनों के मध्यगत अनन्याश्चिन्तयन्तोमाम्" इस मंत्रसे पर देवता

गतस्य अनन्याश्चिन्तयन्तो मामित्यस्यापि परदैवतभक्त परलोकगतिवर्णनपरत्वोपपत्त्या तद्वत् योगक्षेमपदयोः पारलौकिकत्वोपपत्त्या ऐहिकत्वानुपपत्तेः । किञ्च सकामयागपराणां देवतान्तरयाजिनां च निकृष्ट दर्शनत्व ततदुपासनात्यागाय प्रथमानां स्वर्गाच्च्युतिं द्वितीयानां स्वेष्टदेवस्थानाच्च्युतिं दर्शयित्वा तेषां सर्वेषां स्वोपासनाप्रवृत्तये स्वभक्तानां स्वस्थानात्च्युतिं निर्दिष्टवान् तेषां योगक्षेमं वहामीत्यनेन मत्प्राप्ति लक्षणं योग मपुनरावृत्ति

भक्तका परलोक यात्रा का वर्णन किया गया है इस ने अनन्याश्चिन्त यन्तो माम्" इस वाक्य गत" योगक्षेमपद का पारलौकिकही अर्थ होता है, ऐहिकार्थकत्व नहीं है ।

दूसरे एक बात यह भी है, सकाम याग करने वाले और देवतान्तरोंका यजन करने वालोंको निकृष्ट दिखाकर उन उपासना का त्याग करने के लिये सकामयाग करने वालोंकी स्वर्ग से पतन को दिखाकर और देवतांतर भक्तोंके स्वेष्ट देवके स्थान से पतन दिखाकर उन सबको अपने उपासना में प्रवृति के लिये अपने भक्तोंकी अपने स्थान से कभी भी पतन नहीं होता ऐसा भगवानके योग क्षेमं वहाम्यहम्" इस पदसे किया है । क्योंकि योग माने हमारी प्राप्ति और अपुनरावृति को क्षेम कहते हैं यही

लक्षणां क्षेमं च वहामीत्यर्थं एतच्च तदनन्तरं स्फुटयामास यान्ति मद्याजिनोपि मामिति तदेव योगक्षेमपदयोः पारलौकिकत्वोपपत्त्या ऐहिकत्वानुपपत्तेर्नत्वदभीष्ट सिद्धिः। यदित्व-क्षरोपासकस्य ज्ञानिनः पारलौकिकयोगक्षेमं वहति परमेश्वर इत्युच्यते तदा सविशेषब्रह्मभक्त मुक्तिवदक्षरपरमुक्तेरपीश्वराधीनत्वोपपत्तेः पुनः स्त्वदभीष्टहानिरित्युभयतपाशारज्जुः त्वयाद्वाद शाध्यायव्याख्याने ईश्वराधीनमुक्तिपरमेश्वर-भक्तेभ्यः स्वाधीनमुक्तित्वेनाक्षरोपासकानां दर्शितोत्कृष्टत्वस्यात्रव्याघातात् किञ्च भक्ति-

---

बात "यान्मिमद्याजिनोपिमाम" इस पद से भगवान ने स्पष्ट किया है। अतः योग क्षेम पद का पारलौकिक अर्थ होने से ऐहिकार्थ कथमपि नहीं हो सकता। इससे आपके अभीष्ट की सिद्धि नहीं होगी।

यदि अक्षरोपासक ज्ञानी की पारलौकिक योग क्षेम का वहन परमेश्वर करते हैं, यह यदि आप कहते हैं। तो सविशेष ब्रह्म भक्त की मुक्ति की तरह से अक्षरोपासक की मुक्ति भी ईश्वराधीन ही हुई तो भी आपके अभीष्ट की सिद्धि नहीं हुई प्रत्युत हानि हुई, इसलिये दोनों तरह से बंधन की रज्जु है।

प्रकरणगतत्वादपि न तस्य वाक्यस्याक्षरनिष्ट परत्वमुपपद्यते। तथाहि यदुक्तं नवमाध्यायोप- क्रमेप्रत्यक्षावगमंधर्म्यं सुसुखं कर्तुमव्ययमिति ज्ञानविज्ञानयोः प्रत्यक्षावगमत्वादिकत्वमुपपद्यते कुतत्वं तस्य भगवत्कीर्त्तनादिनिष्ठत्वावगमात् तद्गतोर्ज्ञानविज्ञानयोरपितद्भक्तिविषयकत्वतदग्रत नवाक्यानां कीर्तनादिभक्तिपरत्वावगतेः "महा त्मानस्तु मां पार्थ दैवी प्रकृतिमाश्रिता॥ भज न्त्यनन्यमनसो ज्ञात्वाभूतादिमव्ययम्। सततं कीर्तयन्तो मां यतंतश्चदृढव्रताः। नमस्यंतश्च

---

भक्ति के प्रकरणमें वह वाक्य है इससेभी इस वाक्य को अक्षर निष्ठ परत्व उपपन्न नहीं होसकता है, जैसे कि हम बताते हैं नवम अध्यायके उपक्रममें-प्रत्यक्षाऽवगमम्" इस श्लोक से ज्ञान और विज्ञान को प्रत्यक्षका अवगमक है यह प्रतिपादन किया गया है। क्योंकि उसकी भगवत कीर्तनादिकी निष्ठाका बोध कराया गया है अतः ज्ञान विज्ञानकोभी भगवद्भक्ति विष- यता आती है आगेके वाक्यभी कीर्तनादि भक्ति काही बोधन करते हैं। हेपार्थ! दैवी प्रकृतिको आश्रित महात्माजन अनन्य मनसे समस्तभूतोंका आदि भूत अव्यय हम को जानकर भजते हैं निरंतर हमारा कीर्तन करते हैं दृढ़ व्रत होकर हमारी प्राप्ति काही यत्न करते हैं भक्ति पूर्वक हमको नमस्कार करते हैं ऐसे

मां भक्तया नित्ययुक्ता उपासतेइतीत्यादिनां एवम् कीर्तनादिपराणां योगक्षेममहं वहामीत्याह । तत्रैव "अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते । तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहमिति इदानीं स्वभक्तेः प्रत्यक्षावगमत्वादिके निर्दिशति "पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति । तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः,, अस्याः पत्रादिसमर्पणरूपायाः भक्तेः प्रत्यक्षप्रमाणविषयत्वात् । तथा यो यस्मै

---

ईनित्ययुक्त हमारी उपासना करते हैं। इन वाक्यासे कीर्तनादि भक्ति सिद्ध होती है। इसलिये कीर्तन में परायण भक्तोंका हम योग क्षेम वहन करते हैं इस बातको उसी जगह "अनन्यतया हमारा चितवन करते हुए जो जन सर्वतः हमारी उपासना करते हैं उन नित्यही अभियोगी भक्तों के योग क्षेमको हम वहन करते हैं" इस अंशसे भगवान् ने बताया है। अब इस बातको भगवान् बताते हैं कि हमारे भक्त हमारी भक्ति सेही हमको प्रत्यक्ष कर लेते हैं जैसे "पत्रं पुष्पं फलं तोयम्" पत्र पुष्प, फल, जल, को जो कोई हमको भक्तिमे अर्पण करता है, भक्तिसे दिये हुए उस पदार्थ को मैं प्रयत्न पूर्वक सेवन करता हूं। इस पत्रादि समर्पण रूप भक्ति को प्रत्यक्ष प्रमाण विषयता है; अर्थात् यह पत्रादि समर्पण रूपा भक्ति प्रत्यक्षही है और प्रत्यक्ष के लियेही

निः कामेन पुष्पादिकं ददाति न च ततः किंचि-
द्वांछति सतदुपर्य्यवश्यमेवप्रसीदतीति लोके-
पिदर्शनात् । पुष्पादिसमर्पणेन परमेश्वरोवश्य-
मेवप्रसीदतीतिप्रत्यक्षमीश्वरप्रसादात्मकमवगमं
फलं यस्यतत्प्रत्यक्षावगमं तथा तत् पुष्पादिसम
र्पणस्य परमधर्मत्वाद्धर्म्यत्वमपि सिध्यति एतस्य
पुष्पादिसमर्पणस्यसविशेषब्रह्मचिन्तनस्य च तच्छ्र-
वणकीर्तनादेश्च सुखमनुष्ठेयत्वे न सुसुखं
कर्तुमित्युक्तमप्युपपन्नं भवति तथा तत्फल
स्य भगवत्प्राप्त्यात्मकस्याविनाशित्वादव्यय

प्रत्यक्ष वस्तु दिये जायेंगे। तथा जो जिसके लिये निष्काम भाव से पुष्पादिको समर्पण करता है और उससे कुछ चाहता नहीं है, वह उस प्रतिगृहीता दाता के ऊपर अवश्य प्रसन्न होता है यह लोकमेंभी देखा गया है, इसलिये पुष्पादिके अर्पण करनेसे पर-मेश्वर अवश्यही प्रसन्न होंगे। यह ईश्वर का प्रसाद रूप फल प्रत्यक्षहीहै जोकि प्रत्यक्षसे ज्ञात होताहै तथा वह पुष्पादि समर्पण परम धर्म होनेसे धर्म्यत्वभी सिद्ध होता है। यहपुष्पादि समर्पण तथा सविशेष ब्रह्मचिन्तन और श्रवणकीर्तनादि को सुखमय अनुष्ठान करने योग्य भगवानने बताया है। इस लिये सुसुखंकर्त्तुं, यह जो कहा गया है सो भी उपपन्न होता है तथा भगवत् प्राप्तिरूप उसके फल के विनाशी न होनेसे अव्ययता

त्वमप्युपपद्यते तस्य न चेदं ज्ञानस्योपपद्यते तस्य प्रत्यक्षप्रमाणाविषयत्वात्। ज्ञानफलस्य ज्ञानवृतेः परमानन्दावाप्तेश्च आत्मप्राप्तेर्वा स्व संबोधत्वेनतदन्यस्याप्रत्यक्षात् न तस्य प्रत्यक्षावगमत्वमुपपद्यते नापिसुसुखानुष्ठेयत्वं ज्ञान योग प्रकरणे दुरनुष्ठेयानां मनोनैश्चल्यादीनां ज्ञानसाधनत्वोक्तेः द्वादशे अक्षरोपासकानां क्लेशाधिकतरत्वोक्तेश्चेत्यतो नास्य ज्ञानप्रकरणत्वमुपपद्यते किं च "मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु। मामेवैष्यसि युक्त्वैव मात्मानं मत्प-

भी सिद्ध होती है, यह बात ज्ञान की सिद्ध नहीं होती क्योंकि ज्ञान प्रत्यक्ष प्रमाण का विषय नहीं है। और ज्ञानका फल अज्ञान की निवृत्ति और परमानन्द की प्राप्ति है। अथवा आत्माकी प्राप्ति है। इस लिये ज्ञान से बोधित अन्य पदार्थ का ज्ञान से प्रत्यक्ष नहीं हो सकता है। इसलिये ज्ञान प्रत्यक्ष का अवगमक नहीं है। और सुखपूर्वक अनुष्ठेय भी नहीं है, क्योंकि ज्ञान योग प्रकरण में दुःख से अनुष्ठान करने योग्य निश्चलादिक मनआदिका ज्ञान के साधन तथा प्रतिपादन किया गया है। द्वादशाध्याय में अक्षर की उपासना करने वालोंके लिये क्लेश अधिकतर कहा गया है। अतः यहां पर ज्ञानका प्रकरण नहीं है।

शयण,, इतिभक्तिपरवाक्येनोपसंहाराच्च नास्य तदुपपद्यते इतिभक्तिप्रकरणगत त्वेन भक्ति-परत्वोपपत्तेश्च तदन्तर्गतस्य चिन्तनपदस्य ध्या-नपर्यायस्य सविशेष ब्रह्मभक्ति लिङ्गत्वेनापि ना-नन्यचिन्तनवचनस्याक्षरोपासकपरत्वमुपपद्यते किंचाक्षरोपासकैरपिसविशेषब्रह्मभक्त परत्वेन स्वीकृतं "यदनन्येनैवयोगेन मां ध्यायंत उपासते तेषामहं समुद्धर्त्ता मृत्युसंसार सागरात्। भवामि न चिरात्पार्थ मय्यावेशितचेतसामितीदं वाक्यं तेन सहानन्याश्चिन्तयन्तो मां ये जनाः पयु-

दूसरे "मन्मनाभव" इस भक्ति पर वाक्य मेंही प्रकरण का उपसंहार किया गया है इस लिये भी इसको भक्ति परत्व ही माना जायगा, इसलिये भक्ति प्रकरण में इसका प्रतिपादन होने से भक्त परत्वही है उसके भीतरगत ध्यान पर्यायवाचि चिन्तन पदका सविशेष ब्रह्मभक्ति बाधन करने से भी अनन्य चिन्मय वचन को अक्षर उपासक परत्व नहीं हो सकता दूसरे अक्षरो-पासकों ने भी "अनन्ये नैव योगेन" अनन्य योग से जो मेरा ध्यान और उपासना करते हैं उनको मैं मृत्यु संसार सागरसे समुद्धार कर देता हूं--और हेपार्थ! हमारे में आवेशित चित्तवालों को बहुत शीघ्र उद्धार कर देता हूं"। इस वाक्य से सविशेष ब्रह्म भक्त परकही स्वीकार किया है। तथाच-इसी वाक्य के

पासते इत्यस्य तथा "अनन्य चेताः सततं यो मां स्मरति नित्यश" इत्यस्य चैकवाक्यतोपपत्तेरपि नानयो र्वाक्ययोरक्षरोपासक परत्वं निष्पद्यते। तत्कथमितिचेत् तत्र श्रूयमाणानां अनन्येति ध्यायन्त इति उपासते इत्येषां पदानामनयोरपि श्रूयमाणत्वेन तस्या नयोश्चैकार्थकत्वावगमात् ध्यायति चिन्तति स्मरतीनामैकार्थकत्वेन पर्याय वाचित्वाच्च किञ्चद्द्वादशोपक्रमेकृतात् एवं सतत युक्ता ये भक्तास्त्वां पर्युपासते। येचाप्यक्षर-

---

साथ "अनन्याश्चिन्तयन्तो मां" अनन्य चेताः सततं,, इन दोनों वाक्यों को एक वाक्यता उपपन्न होती है। इसलिये उपरोक्त इन दोनों वाक्यों को अक्षरोपासक परत्व उपपन्न नहीं हो सकता है। किस प्रकार से उपरोक्त इन दोनों वाक्यों को अक्षरोपासक परत्व क्यों नहीं सिद्ध हो सकता है यदि यह शंका करो तो उसका उत्तर है कि उपरोक्त वाक्यों में सुने गये जो अनन्या ध्यायंते, उपासते, इन पदों का इन दोनों वाक्यों में श्रवण होता है। इसलिये उस वाक्य का और इन दोनों वाक्यों की एकार्थकता है। ध्यान, चिंतन, स्मरण इन वाक्यों की पर्य्यायता शाब्दिकों ने मानी है,

किंच द्वादशाध्याय के उपक्रम में "एवं सतत युक्ता ये" इस प्रकार से सतत युक्त होते भक्त जो आपकी उपासना करते हैं

मव्यक्तं तेषांके योगवित्तमा इत्येतस्मादर्जुन प्रश्नादपि एषां सर्वेषां वाक्यानां सविशेषब्रह्मोपासकपरत्वं निष्पद्यते तदपि कथमितिचेत् उच्यते अयमर्जुनस्य प्रश्नः भगवदन्योपासना क्षरोपासना श्रवणं बिनानुपपद्यमान स्वः पूर्वतनग्रंथे द्विविधाप्युपासना भगवन्मुखोक्ताजुनेन श्रुता इति सूचयति । सा चाक्षरोपासनान्यत्राश्रूयमाणा अष्टमे यदक्षरं वेदविदो वदन्तीत्यत्र याजुनेन श्रुता तथाऽनन्योपासनापि अनन्यचेताः सततं यो मां स्मरति

"और जो अव्यक्त अक्षर को उपासना करते हैं उन दोनों प्रकार के भक्तों में आपके मंत से योगवित् कौन है । श्रीकृष्णजी के प्रति किये हुये अर्जुन के प्रश्न से भी इन सब वाक्यों को सविशेष ब्रह्मोपासक परता ही सिद्ध होती है । यदि सन्देह करो कि इस प्रश्न से सविशेष ब्रह्मोपासक ही सिद्ध होता है सो कैसे उसका उत्तर यह है कि यह अर्जुन का प्रश्न भगवदुपासना और अक्षरोपासना के श्रवण के विना अनुपपन्न होता हुआ प्रश्न के पहिले ग्रंथ में दोनों उपासनावों को भगवान् के मुख से अर्जुन ने सुना है, यह सूचित करता है, वह अक्षरोपासना दुसरी जगह तो सुनी नहीं गई है, किन्तु अष्टमाध्यायमें यदक्षरं वेदविदो वदन्ति यहां पर अर्जुनने सुनी है । औरअनन्योपासक

नित्यशः । अनन्याश्चिन्तयन्तो मामित्यादि वाक्योक्ता तेन श्रुतेत्यवगम्यते । नच स्वसन्निहिततरे एकादशान्ते भक्त्या त्वनन्यया शक्यो-ऽहमेवं विधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्वेन प्रवेष्टुं च परंतप इत्युक्ता सा तेन श्रुतेति वाच्यं तत्रानन्यभक्तिलक्षणतदुपासनाप्रकारस्यानुक्तेरेतद्वाक्यमात्रं श्रुत्वा "एवं सतत युक्ताये भक्तांस्त्वाम्पर्युपासते इत्येतादृश प्रश्नस्यानुपपत्तेः । कुतः । सततोपासनपदयोस्तत्रा-

---

भक्तों की उपासना का अनन्य चेताः "अनन्यश्चिन्तयन्तः" इत्यादि वाक्यों से कई जगह अर्जुनने सुना है।

यदि यह शंका करो कि इस द्वादशाध्याय के समीप में ही एकादशाध्याय के अन्तमें भक्त्यात्वनन्यया" हे अर्जुन अनन्य भक्ति से ही इस प्रकार से मैं जानने और देखने योग्य हूं। हे परंतप यथार्थ भावसे प्रवेश भी अनन्य भक्ति सेही कर सकते हैं, यह जो उपासना उसने सुना है। इसीका अनन्योपासना मानकर उसने प्रश्न किया है, यह कहो तो नहीं कह सकते हैं क्यों कि वहां अनन्य भक्ति का लक्षण और अनन्य उपासना प्रकार नहीं कहा गया है केवल ऐसे वाक्य को ही सुनकर "एवं सततयुक्ता" इस प्रकार का प्रश्न हो नहीं सकता है।

क्योंकि सतत और उपासना पदका वहां श्रवण नहीं है

श्रवणात् । तस्मात् अनन्य चेता, अनन्याश्चि न्तयन्त इत्यत्र तदुपासना प्रकारं श्रुत्वा तत्रैव सततं पद मुपासते इति पदं च श्रुत्वार्जुनेन तादृशः प्रश्नः कृतः एवं सततयुक्ता ये त्वा-मुपासते इत्ययमितीत्यवगम्यते भक्तयात्व नन्ययेत्येतद्वाक्यं तु तदुद्देशेनं तत्र भगवत्त स्वबोधकत्वादिविधायकतया तत्फल प्रकाशकं श्रुतं । अनन्यचेताः इत्यत्राऽनन्यपदमुपासना पदं चानन्यभक्त्या त्वनन्ययेतिवाक्येन भक्तिपदा-भ्यामनूद्य भगवत्स्वरूपयाथात्म्यदर्शकत्वादि-तद्धर्मप्रकाशनात् स्वाभाविकस्य तद्धर्मस्य विधा-नानुपपत्तेः ) किञ्च भक्तया त्व नन्येतिवचन-स्यानन्यभक्तिलक्षणापेक्षत्वेन किं लक्षणा-

---

इसलिये अनन्य चेता और अनन्याश्चिन्तयन्त इन दोनों वाक्यों के उपासना के प्रकार को सुनकर और वहीं पर सततं उपासते इसपद को भी सुनकर ऐसा प्रश्न अर्जुन ने किया है।

तथा "भक्तयात्वनन्यया।" यह वचन अनन्यभक्ति लक्षणसापेक्ष होने से भक्ति का लक्षण क्या है ऐसा पूछने पर अनन्य चित्त के सतत भगवद्‌र्पण ही भक्ति का लक्षण है' इसी तात्पर्यसे अनन्य

नन्याभक्ति रित्येवं पृष्टे अनन्यचेतस्तया सात-
त्येन भगवच्चिंतनमेव तल्लक्षणं । अनन्यचेता
इति अनन्याश्चिन्तयन्तः इति च द्वये बोध-
कत्वात् तद्वाक्यद्वयमेवानन्य भक्तेः सर्वथा
बोधकमतस्तद्वाक्य द्वयेभक्तिलक्षणश्रवणात् ।
भक्त्यात्वनन्ययेत्यत्र भगवत्स्वरूपयाथात्म्य-
दर्शकत्वादितद्धर्मश्रवणाच्चैतादृशस्याज्ुनप्र-
श्नस्य प्रवृत्तिरिति मन्तव्यं तस्यार्जुनंप्रश्नस्योत्तर-
तया यान्युक्तानि भगवदुपासकविषयाणि अक्ष-
रोपासकविषयाणि च "मय्यावेश्य मनो ये मां

चेताः और अनन्याश्चिन्तयन्तः इन दोनों जगह बोधन किया गया है, अतः ये उपरोक्त दोनों वाक्य अनन्य भक्ति के ही लक्षण जानना चाहिये, 'भक्त्यात्वनन्यया' यहांपर भगवत्स्वरूप को यथार्थतया दिखाने वाले धर्म का श्रवण है । ऐसा समझ कर ही अर्जुन के प्रश्न की प्रवृत्ति है, यह जानना चाहिये । अर्जुनके प्रश्न के उत्तरमें कहे गये भगवत् उपासक विषयक और अक्षरोपासक विषयक निम्नलिखित वाक्य भगवान के प्राप्ति के उपाय होने से समस्त मुमुक्षुओं को अनुष्ठान करने योग्य हैं, ऐसा प्रकाशन किया है "तत्रेति, तद्यथा मय्यावेशित्यादिक, अर्थात् हमारे में मनको लगाकरके परम श्रद्धा से नित्य युक्त होकरके जो हमारी उपासना करते हैं वे ही हमारे मतसे उत्तम

नित्ययुक्ता उपासते। श्रद्धया परयोपेतास्ते मे युक्ततमा मताः।२। ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते। सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवं। संनियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः। ते प्राप्नुवन्ति मामेव सर्वभूतहितेरताः।४।क्लेशोधिकतरस्तेषामव्यक्तासक्तचेतसाम्। अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते।५। ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः।अनन्येनैव योगेन मां ध्यायंत उपासते।६। तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात्। भवामि न चिरात्पार्थ मय्यावेशित-

---

योगी कहे जाते हैं। "और जो निर्देश रहित अव्यक्त सर्वत्र व्याप्त अचिन्त्य, कूटस्थ, अचल, ध्रुव, अक्षर की सम्पूर्ण इन्द्रियों के समुदाय को रोककर सब जगह समान बुद्धि होकर उपासना करते हैं सर्व भूतों के हित करने में तत्पर वे अक्षरोपासक भी हमही को प्राप्त होते हैं। परंच उन अव्यक्त में उपासक्त चित्त-वालों को क्लेश अधिकतर होता है क्यों कि देहधारियों को अव्यक्त की गति दुख से प्राप्त होती है "और जो सम्पूर्ण कर्मों को हमारे में न्यास करके हमारे परायण होकर अनन्य योग से हमारा ध्यान करते हैं हमारी उपासना करते हैं, ऐसे उन हमारे में आवेशित चित्त वाले भक्तों को मैं मृत्युरूप संसार सागर से शीघ्र ही उद्धार कर देता हूं। 'हमारे में ही मनको

चेतसां । ७ । मय्येव मन आधत्स्व मयि बुद्धिं निवेशय । निवसिष्यसि मय्येव अतऊर्द्ध्वं न संशय इत्यादीनि वाक्यानि । तत्र मय्यावेश्य मन इति वाक्येन स्वोपासकानां युक्ततमत्वमुक्त्वातदुपपत्तये येत्वक्षरमनिर्देश्यमित्यादिभिरक्षरोपासनायाः क्लेशोधिकतरसाध्यत्वेन तत्फलस्य दुखमवाप्त्या चायुक्ततमत्वसूचनद्वारा तस्या अननुष्ठेयत्वं सूचयित्वा तदनन्तरं ममुक्षूणां सर्वेषां स्वोपासनायां प्रवर्तयितुं ये तु सर्वाणि कर्माणीत्यादिना सविशेषब्रह्मचिन्तनस्य सुखसाध्यत्वे-

---

लगावो, हमारेमेंही बुद्धिका निवेश करो ऐसा करनेके बाद आप हमारे में ही सतत वास करने वाले हो जावोगे इसमें सन्देह नही है येही भगवत उपासक और अक्षरोपासक परक वाक्यहै इनवाक्यों में मय्यावेश्य मनः" इस वाक्यसे अपने उपासकोंको भगवान ने युक्तनम कहा है उसकी उपपत्तिके लिये "येत्वक्षर" इत्यदिक वाक्य से अक्षरोपासना को अधिकतर क्लेशसे साध्य बताकर उस उपासना के फल को भी दुखसे मिलना बताकर इस उपासनाको अत्यन्त अयुक्तम की सुचना देते हुए, इसका अनुष्ठान नहीं करना चाहिये, ऐसा सूचित करके तदनन्तर सब मुमुक्षुओं को अपनी उपासना में प्रवृत्त करने केलिये "ये तु सर्वाणि" इसवाक्य से सविशेष ब्रह्म चिन्तन को

न स्वोपासनाया सुखमनुष्ठेयत्वं तत्फलस्य स्वप्राप्तिरूपस्य स्वसाध्यत्वं च निर्दिश्यानंतरं मय्येव मन आधत्स्वेत्यनेन कण्ठतः स्वभक्तान् प्रति अवश्यं स्वभक्त्यनुष्ठानमाज्ञाप्य निवसिष्यसि मय्येवअत ऊर्ध्वं न संशय इत्यनेन एवं भूतानां मद्भक्तानामस्यैवदेहस्यान्तेऽवश्यं मत्प्राप्तिर्भविष्यतीति प्रतिज्ञाय स्वभक्तेः सुखमनुष्ठेयत्वेन न चिरात्समुद्धर्ता अत उर्ध्वं निवसिष्यसीत्याभ्यां प्रारब्धावसानेऽवश्यं भगवत्प्रापकत्वेन च समस्तमुमुक्ष्वनुष्ठेयत्वं प्रकाशयामास। तदेवमनया-

सुख साध्य होनेसे हमारी उपासना सुखमय अनुष्ठान करने योग्य है, और उसका फल हमारी प्राप्ति रूप है, उस उपासना मे हमही साध्य हैं ऐसा निर्देश कर बाद को मय्येव मन आधत्स्व, इस वाक्य से अपने कंठ रवसे अपने भक्तों के प्रति अवश्य करके हमारी भक्ति का अनुष्ठान करना चाहिये ऐसी आज्ञा देकर निवसिष्यसि मय्येव" इस वाक्यसे एवंभूतहमारे भक्तों को इसी देह के अन्त में अवश्य करके हमारी प्राप्ति हो जावेगी, ऐसी प्रतिज्ञा करके अपनी भक्ति का सुखमय अनुष्ठान होने से, "नचिरात्समुद्धर्त्ता, अत उर्ध्वं निवसिष्यसि इन" दोनों वाक्यों से प्रारब्ध के अन्त में अवश्य करके भगवत्प्रापक होनेसे समस्त मुमुक्षुओंको अनुष्ठान करने योग्यहै। ऐसा बता-

पिरीत्या अनन्यचेताः सततं, अनन्याश्चिन्तयन्त इत्येवमादीनां भगवद्भक्तपरत्वमुपपद्यते। तत्कथमिति चेत् अनन्यचेता इत्यादीनामर्जुनकृतप्रश्नमूलभूतानां तथा "मय्यावेश्य मनःपार्थ ये तु सर्वाणि कर्माणि मयि सन्यस्य मत्पराः। अनन्येनैव योगेन मां ध्यायन्त इत्यादीनां सविशेषब्रह्मोपासकपरत्वेन निश्चितानां तत्प्रश्नोत्तरभूतानां चैकार्थपरत्वोपपत्तेः उभयवादिनिश्चितसगुणब्रह्मोपासकपरत्वेनानन्येनैव योगेन मां ध्यायन्त उपासते इत्यनेकवाक्यतामात्रद्वारा तयोः भगवद्भक्तपरत्वं तु पूर्वमेवोपपादितमित्य

---

या गया है। इस रीति से भी "अनन्य चेता सततं', 'अनन्याश्चिन्तयन्त" इत्यादि वाक्यों को भगवद्भक्तपरता सिद्ध होती है। यदि कहो कि इन वाक्यों को भगवंत् परता कैसे सिद्ध होती है तो यहां अनन्य चेता इत्यादिक अर्जुन के किये-गये प्रश्न के मूल भूत वाक्यों का तथा मय्यावेश्य मन पार्थ" येतु सर्वाणि कर्माणि,' इत्यादिक वाक्यों का सविशेष ब्रह्म उपासक परतया निश्चित प्रश्न और उत्तर भूत वाक्यों को एकार्थ परता सिद्ध होती है उभय वादी से निश्चित सगुणब्रह्म

त्वमिति विस्तरेण। अत्र यस्याक्षरकूटस्थशब्द वाच्यस्योपासना निर्दिष्टा ये त्वक्षरमनिर्देश्यमित्यादिना स तुरीयावस्थास्थो जीवो भवितुमर्हति न तु निर्विशेषं ब्रह्म कुत इतिचेत् यान्यत्र श्रूयन्ते अनिर्देश्याचिन्त्यादीनि तद्विशेषणानि तेषामेव मांडूक्याद्यासूपनिषत्सु तुरीयावस्थास्थकूटस्थाक्षर शब्दाभिधेयप्रकरणे श्रवणात्। किञ्चात्रापि पंचदशेक्षरः सर्वाणि भूतानि कूटस्थोक्षर उच्यते। उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यस्मात्क्षरमतीतोहमक्षरादपिचोत्तम इति

---

उपासक परक,, अनन्ये नैव योगेन' इस वाक्य के साथ एक वाक्यता के द्वारा उपरोक्त दोनों वर्गों को भगवद्भक्त परत्व ही उपपन्न होता है यह हम पहले भी प्रतिपादन कर चुके हैं, अब हम इस प्रसंगको यहीं छोड़ते हैं विस्तारकी आवश्यकता नहीं है।

यहां पर जिस अक्षर, कूटस्थ, शब्द वाच्य की उपासना "यत्वक्षरमनिर्देश्यम्" इस करके कही गई है वह तुरीयावस्था में स्थित जीव हो सकता है, निर्विशेष ब्रह्म नहीं हो सकता है क्योंकि यहां अनिर्देश्य अचिन्त्यादिक जो विशेषण सुने गये हैं वे माण्डूक्यादिक उपनिषदों में तुरीयावस्था में स्थित और कूटस्थ अक्षर शब्द से कहे गये के प्रकरण में सुने

स्वस्मान्निकृष्टत्वं निर्दिष्टमतः कूटस्थाक्षरशब्द-वाच्योजीवो भवितुमर्हति, श्रीकृष्णादुत्कृष्टत्वेन स्वीकृतस्य निर्विशेषस्य ब्रह्मणस्ततो निकृष्टत्वानुपपत्तेः। एवं षष्ठोक्तज्ञानयोगप्रकरणस्य द्वादशोक्ताक्षरोपासनप्रकरणेनैकार्थ्यंतया तस्यापि तुरीयावस्थास्थजीवपरत्वमुपपद्यते। तत्रैवात्मसंस्थं मनः कृत्वेत्यात्मपदश्रवणात्। तेनैकवाक्य वाक्यतयासुखेन ब्रह्मसंस्पर्शमत्यन्तंसुखमश्नुते इत्य-स्यात्रत्यो ब्रह्मशब्दोपि जीवपरत्वेन भवितव्यः। ननु तुल्ययुक्तात्मशब्दस्य ब्रह्मपरत्वे

---

गये है। इसलिये तुरीयावस्थाजीव परक ही है। १५ वें अध्याय में "क्षरः सर्वाणि भूतानि, यस्मात्क्षरमतीतोऽहं, इत्यादि वाक्यों में अपने से निकृष्टतया अक्षर पद वाच्य का निर्देश किया गया है। अतः कूटस्थ अक्षर शब्द वाच्य जीवही हो सकता है, श्रीकृष्णजीसे उत्कृष्टतया स्वीकृत निर्विशेष ब्रह्मको श्रीकृष्णजी छोटापन उपपन्न नहीं हो सकता है। इस प्रकार षष्ठाध्याय में कहे गये ज्ञानयोग प्रकरण की द्वादशाध्याय में कहेगये अक्षरो-पासना प्रकरणके साथ एकार्थकता होनेसे ज्ञानयोग प्रकरणभी तुरीयावस्था जीवपर कही है, वहीं पर तुरीयावस्था जीवपर कही आत्मपद का श्रवण किया गया है, अतः उस वाक्य का ब्रह्म शब्दभी जीवपरक ही है।

मुपपाद्यास्ययोगप्रकरणस्यब्रह्मपरत्वं मान्य मिति चेन्न । प्रशांतमनसं ह्येनं योगिनं सुखमुत्तमं । उपैति शांतरजसं ब्रह्मभूतमकल्मषमित्यस्य वाक्यस्य विमुच्य निर्ममः शांतो ब्रह्मभूयाय कल्पते ब्रह्मभूत इत्यनेन प्राप्तप्रत्यगात्मपरतयानिश्चितेनैकार्थ्यादत्र श्रुतस्य ब्रह्मशब्दस्य जीवपरत्वनिश्चयात् । किञ्च योगिनामपि सर्वेषा-

अब सन्देह यह होता है कि जिस उक्ति से आपने इस प्रकरण को जीव परक माना है उसी युक्तिसे आत्म शब्द को ब्रह्मपरक मानकर इस योग प्रकरण को ब्रह्मपरक ही मानना चाहिये। सो नहीं हो सकता है क्योंकि "प्रशान्त मनसं" अर्थात् प्रशान्त मनवाले इस मार्ग को उत्तम सुख मिलता है, इस वाक्य का "विमुच्यनिर्मम:" निर्मानी विमुक्त होकर शान्त पुरुष ब्रह्मभाव को प्राप्त होता है इस वाक्य के साथ जोकि प्रत्यगात्मपरतया निश्चय हो चुका है उसके साथ एकार्थकता होने से यहांपर सुना गया ब्रह्म शब्द जीवपरकही है यही निश्चय समझना चाहिये।

किंच योगिनामपि सर्वेषाम्" इसवाक्यसे षष्ठाध्यायमें कहे गये योग से सिद्धों के लिये अपर्ना भक्ति योगमे प्रवृत्त कियाहै इसेभी यह ब्रह्म परक नहीं है यही सिद्ध होता है, निर्विशेष पर ब्रह्म अक्षर परायणों का सगुण ब्रह्म की उपासना अनु-

मित्यनेन षष्ठोक्तयोगसिद्धानां स्वभक्तियोगे प्रवर्तनादपि नास्य परब्रह्मपरत्वमुपपद्यते निर्विशेषपरब्रह्मपराणां सगुणब्रह्मोपासनानुष्ठानायोग्यात्। किञ्च क्षरोपासनाविषयोऽर्जुनप्रश्नोऽप्यन्यथानुपपद्यमानोऽस्मिन् प्रकरणे स्वविषयमनुपलभ्य परिशेषादस्यैव योगप्रकरणस्याक्षरोपासनाप्रकरणमुपपादयति। किञ्च येत्वक्षरमनिर्देश्येत्यादिवाक्ये क्षरोपासनाप्रकारश्रवणेनास्य वाक्यस्याक्षरोपासनानुवादकत्वमात्रनिश्चयेन षष्ठोक्तयोगप्रकरणस्यैव तदुपासनाविधायकत्वमुपपद्यते,

---

ष्ठान करने की अयोग्यता हो है। अक्षरोपासना विषयक अर्जुन का प्रश्नभी दूसरे प्रकार से उत्पन्न न होकर प्रकरण में अपने विषयको न प्राप्त करके परिशेष से इसी योग प्रकरणके अक्षरोपासना प्रकरण का उपपादन करता है।

किंच "येत्वक्षरमनिर्देश्य" इत्यादि वाक्योंमें अक्षरोपासना के प्रकार का श्रवण न होने से इसी वाक्य का अक्षरोपासना के अनुवादक वाक्य का निश्चय करके षष्ठाऽध्यायमें कथित योग प्रकरण को भी अक्षरोपासना विधायक माना जायगा, क्योंकि "यतो यतो निश्चरति" अर्थात् अस्थिर चचल मन जिधर२ जाय उधर २ से उसका नियमन करके आत्मा में वशीभूत करे, आत्मा में मन को स्थिर करके कुछ

यतोयतोनिश्चरति मनश्चंचलमस्थिरं । ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥ ६ । २६ ॥ आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत् इति तत्रैव नयेत्, न चिंतयेदित्यादिविधिप्रयोगश्रवणात् । ननुश्रीकृष्णादपकृष्टत्वेन निर्दिष्टस्याक्षरस्य नात्रोपासनानिर्दिष्टा किन्तु परस्तस्मातुभावोन्योऽव्यक्तोऽव्यक्तात्सनातनः । यस्तु सर्वेषु भूतेषु नश्यत्सु न विनश्यति । अव्यक्तोक्षर इत्युक्तस्याव्यक्तात्परस्याक्षरस्य यः श्रुतौ महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्नपरं किंचि-

---

भी चितवन न करे । इन वाक्यों में ही "नयेत् चिन्तयेत्" इत्यादिक विधि वाक्यों का श्रवण है । अतः यही प्रकरण विधि प्रकरण माना जायगा :

अब यहां यह सन्देह करते हैं कि कृष्णजी से छोटा करके निर्देश किये गये, अक्षर की उपासना यहां पर नहीं बताई गई है किन्तु-परस्तस्मात्तु भावोन्यो" अर्थात् उसभावसे अन्य अव्यक्त सेभी अव्यक्त सनातन परे है जोकि सबभूतों के नाश होजानेपरभी नष्ट नहीं होता इस करके कहेगये अव्यक्त से परे अक्षर की उपासना बताई है श्रुति में भी "महत परम व्यक्त" अर्थात् महान् से परे अव्यक्त है, अव्यक्त से परे पुरुष है पुरुष से परे कुछ नही है, वही काष्ठा है और वही परम गति है इसकरके

त्सा काष्ठा सा परा गतिरित्यस्यामव्यक्तात्परस्थितित्वेन परपुरुषत्वेनोक्तः यस्मात्परत्वमन्यस्य निरस्तं श्रुत्यातस्यातयोरक्षरपुरुषशब्दवाच्ययोरव्यक्तात्परत्वसाम्येनैकत्वोपपत्तेः । यश्च सर्वपरपुरुषशब्दवाच्यः सर्वोत्कृष्टः यद्वै अक्षरं गार्गि ब्राह्मणा अभिवदन्ति इत्यत्र अक्षरत्वेन श्रूयते तस्येति चेन्न महानव्यक्ते लीयते अव्यक्तमक्षरे लीयतेऽक्षरं तमसि लीयते तमः परे देवे एकी भवति तथा अक्षरात्परतः परः इत्यादि श्रुतिषु अव्यक्तात्परादप्यक्षरात्परदेवस्य परत्वश्रवणात्

---

अव्यक्त से भी परात्परतया स्थित परम पुरुष शब्द से कहेगये की उपासना बताई गई है । जिसलिये इसश्रुती में अन्य के परत्व का निषेध किया गयाहै, अक्षर और पुरुष शब्द वाच्य को अव्यक्त से परत्व की साम्यतासे एकत्वभी उपपन्न होताहै । इसलिये अक्षर पदसे यहां परम पुरुषही लिया जायगा । और जो परम पुरुष वाच्य सबसे उत्कृष्ट कहा गया है, वही एतद्वै अक्षरं गार्गि" अर्थात् हे गार्गि इस अक्षरको ब्राह्मण लोग अभिवादन करते हैं, यहां पर अक्षर शब्द से सुना गया है, उसीकी उपासना यहां विहित है सो नहीं कह सकते ? क्योंकि महान् अव्यक्त में लीन होता है, अव्यक्त अक्षर में लीन होता है, अक्षर तमस में लीन होता है और तमस पर देवता में एकीभूत हो

अव्यक्तात्परस्याप्य क्षरस्य जीवोत्वपपत्तेः तदनुरोधेनाव्यक्तात्पुरुषः पर इत्यत्र व्यक्तोऽक्षरइत्युक्तस्याक्षरपर्यायस्याव्यक्तशब्दस्य प्रधानवाचकस्याव्यक्तशब्दस्य च समानरूपत्वेनैकीकरणादव्यक्तशब्देन प्रधानाक्षरयोर्द्वयोरपि बोधात् द्वयोरपि परत्वं पुरुषस्योपपद्यते। अथवा अव्यक्तादित्यत्र सारूप्यात् तंत्रेण द्वयोरव्यक्तयोरुपादानात् प्रधानाक्षराणां परत्वं पुरुषस्योपपद्यते। तस्य पुरुषशब्दस्य वाच्योयं श्रीकृष्णः येनाक्षरात्परत्वमात्मन उक्तं अक्षरादपि चोत्तम इति, येन पुरु-

---

जाता है॰॰पुनः दूसरा वाक्य का अर्थ अक्षर से भी परे पर पुरुष है इत्यादिक श्रुतियोंमें अव्यक्त से परे अक्षर, अक्षर से परे पर देवताका परत्व सुनाजाता है। इसलिये अव्यक्त से पर अक्षरकी जीवसंज्ञा उपपन्न होती है। इसीके अनुरोधसे "अव्यक्तात्पुरुषः परः" ( अव्यक्तसे परे पर पुरुष है ) यहाँ पर अव्यक्तोक्षर इत्युक्तः ( अव्यक्त को अक्षर कहते हैं ) अव्यक्त अक्षर का पर्यायवाची शब्द है। अतः अक्षर के पर्याय वाची अव्यक्त शब्द का और प्रधान वाचक अव्यक्त शब्द का समान रूप होने से एकीकरण करने पर अव्यक्त शब्द से प्रधान और अक्षर दोनों कोही बोध होते हैं अतः परम पुरुष दोनों से परे हैं। यह सिद्ध होता है अथवा "अव्यक्तात्पुरुषः परः" यहांपर सारूप्य होनेसे तंत्र

षान्न परं किंचिदिति श्रुत्यैव स्वस्मात्परत्वमन्यस्य निषेधितं मत्तः परतरं नान्यत्किंचिदस्ति धनञ्जय इति। तदेवं पुरुषपरश्रुतेः श्रीकृष्णपरवाक्यानां चैकार्थ्यात्, पुरुषकृष्णशब्दयोरेकवाचकत्वोपपत्तेः। श्रुत्या पुरुषादन्यपरत्व निषेधात् तस्यैव परकाष्ठत्वपरगतित्वनिर्देशाच्च। एतद्वै अक्षरं गार्गि ब्राह्मणा अभिवदन्ति इत्युक्तस्याक्षरस्यापि ततः परत्वानुपपत्तेः। योगवृत्या तस्यैवाक्षरशब्दस्य श्रीकृष्णवाचकत्वोपपत्तेः, तस्यैव विश्वरूपे आकाशादीनामेतत्वयोतत्वस्मृतेश्च अनिर्देश्य वपुः श्रीमानमेयात्मा महाद्रिधृक्।

के द्वारा दोनोंही अव्यक्तोंका उपादान है अतः प्रधान और अक्षर से परे पुरुष है यह उपपन्न होता है।

इस पुरुष शब्दके वाच्य यह श्री कृष्णजी ही हैं जिन्होंने अक्षर से परे अपने को बताया है, "अक्षरादपिचोत्तम" इस श्लोक से और जिन्होंने पुरुषात् न परं किंचित्) (पुरुष से परे कुछ नहीं है) इस श्रुति की तरह से मत्तः परतरं नान्यत्० (हे धनजय। हमसे परे कोई चीज नहीं है) इस श्लोक से अपने से परे दूसरे का निषेध किया है इससे पुरुष प्रतिपादिका श्रुतियों से श्रीकृष्ण प्रतिपादक वाक्यों के साथ एकार्थ होने से पुरुष

अनिर्देश्यवपुर्विष्णुर्वीरोनंतो धनंजय, इति वि-
ष्णुसहस्रनाम्नि तद्वपुषोनिर्देश्यत्वनिर्देशात्।
तस्यापाररूपलावण्यादेः क्षणे क्षणे नवनवतया
प्रतीयमानत्वेनाद्वितीयत्वेन च चिंतितुमतएव
गृहीतुं केनापि दृष्टान्तेन निर्देष्टुं चातएव ल-
क्षयितुं चाशक्यतयां तत्रैवाचिन्त्याग्राह्यानिर्दे-
श्या लक्ष्यादिपदानां पर्यवसानत्वोपपत्तेः। एष

---

कृष्ण शब्दों को, एक वाचकता उपपन्न होती है श्रुति से पुरुष से अन्यका परत्वका निषेध होनेसे और उसी पुरुषको पराकाष्ठा और परगति निर्देश होनेसे "एतद्वै अक्षरं गार्गि" इस श्रुति मे कहे गये अक्षर वाच्यकोभी पुरुष से परत्व पद उपपन्न नहीं हो सकता। योगवृत्तिसे अक्षर शब्दको कृष्ण वाचकता हो भी सकती है।

अनिर्देश्य—( अनिर्देश्य शरीरवाले हैं श्रीविशिष्ट हैं अमेय आत्मा हैं महापर्वत को धारण करने वाले। हे धनंजय! विष्णु भगवान अनिर्देश्य शरीर वाले हैं और वीर अनंत हैं यह विष्णुसहस्रनाम में उनके शरीर को अनिर्देश्यतया निर्देश्य किया है, अतः उनके ( श्रीकृष्णजी ) अपार रूप लावण्यादिकों क्षण २ में नवीन २ प्रतीत होनेसे अद्वितीयतया चिंतन करने के लिये और किसी भी दृष्टान्त से निर्देश्य और लक्षण करने के लिये अशक्य होने से श्रीकृष्ण भगवान में ही, अचिन्त्य अग्राह्य, अनिर्देश्य अलक्ष, इत्यादि पदों की पर्यवसानता होती

गीतोपदेष्टा प्रपन्नस्यार्जुनस्य सारथ्ये स्थितः भक्तवात्सल्येनक्षणेक्षणेऽर्जुनस्यमुखंपश्यन् यथात-ञ्जयो भवेत्तथैव यतमान एवमन्येषामपि स्वभक्तानां यथा कामक्रोधादिपरमशत्रुजयद्वारा परमानन्द-प्राप्तिर्भविष्यति तथा यतिष्या गतिं सूचयति यः स एवोपनिषत्सु अक्षरादिशब्देनोच्यते नेतोऽन्यत किंचिन्निर्विशेषं ब्रह्मभवितुमर्हति यदुपासकोप्यस्यो-पासकादाधिक्यं लभेत् न च तस्योपासना कुत्रा-पि श्रूयते गीताशास्त्रे यस्यत्वक्षरस्योपासना श्रूयते अत्र तस्य श्रीकृष्णादपकृष्टतया तदुपासना-

है क्योंकि यह गीता शास्त्र के उपदेष्टा श्री कृष्ण जी प्रपन्न अर्जुन के सारथी बनकर भक्तवत्सलता से क्षण क्षण में अर्जुन के मुख को देखते हुए जिस प्रकार से अर्जुन की जय होवे उसी प्रकार का यत्न करते थे इसी प्रकार से और भी अपने भक्तों के काम क्रोधादि परम शत्रुओं के जय के द्वारा परमानन्द की प्राप्ति जि-सप्रकार से होगी वैसा यत्न अवश्य करेंगे यह सूचित करते हैं। वेही उपनिषदोंमें अक्षरादि शब्दसे कहे जाते हैं अतः इनको छोड़ कर दूसरा कोई भी निर्विशेष ब्रह्म नही होसकता क्योंकि उपा-सक उपास्य इन श्री कृष्णमे आधिक्य वाला होवे इन श्री कृष्ण से अधिक उपासना कही सुनी भी नहीं जाती है गीताशास्त्र में जिस अक्षर की उपासना कही गई है वे श्री कृष्णसे छोटे होनेसे

या अपि श्रीकृष्णोपासनातोऽपकृष्टतया जीवत्वेन सुष्ठु निर्णीतः सः तेषामक्षरोपासकानां मध्ये यः कश्चित्स्वात्मज्ञानानन्तरं भगवन्तं भजते स परभक्तिद्वारा भगवन्तं प्राप्नोति अन्ये त्वात्मानंदनिमग्नास्तिष्ठंति । तथा हि, योगिनामपि सर्वेषां मद्गतेनान्तरात्मना । श्रद्धावान् भजते य इत्येकवचननिर्देशात् तथा "मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये । यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वत" इत्यत्राप्येकवचनात्, सिद्धयोगानां प्राप्तप्रत्यगात्मयाथात्म्यज्ञानानां

---

उनकी उपासनाभी कृष्णके उपासनासे छोटीही है अतः अक्षरको जीवत्व वही निर्णय होता है यह पूर्णतया प्रतिपादन सिद्ध होता है

इन अक्षरोंपासकों के मध्य में जो कोः आत्मज्ञान के बाद भगवान का भजन करता है, वह परभक्ति के द्वारा भगवान को प्राप्त होता है और जो भजन नहीं करते वे आत्मानन्द में ही निमग्न बने रहते हैं, तथाहि योगिनामपि सर्वेषां०" ( सब योगियों में भी हमारे में मनको लगाकरके श्रद्धापूर्वक जो हमारा भजन करता है ) इसमें एक वचनका निर्देश किया है और मनुष्यणामिति ( सहस्रों मनुष्योंमें कोई सिद्धि के लिये यत्न करता है और यत्न करने वाले सिद्धों में भी कोईही यथार्थ रूपसे हमको जानताहै) यहां परभी एक वचन का

कश्चिदेकः परभक्तिलाभद्वारा भगवन्तं तत्त्वतो वेत्तीति सप्तमोपक्रमे निर्दिश्य, अष्टादशान्ते इममर्थं स्फुटयामास, सिद्धिं प्राप्तो यथा ब्रह्मतथाप्नोति निबोध मे इत्यारभ्य "विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते। ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति। समः सर्वेषु भूतेषु मद्भक्तिं लभते परां। भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वत" इत्यन्तेन। ननु यः षष्ठोक्तयोगानुष्ठानेनात्मानं प्राप्तः स एव परभक्तिलाभद्वारा भगवत्तत्त्वं ज्ञातवानित्यष्टादशे उक्त इति कथमव-

---

निर्देश करने से योगसिद्धि को प्राप्त हुए और प्रत्यगात्मा का जिनको यथार्थ ज्ञान होगया है उनके मध्यमें कोई एक पर भक्ति के लाभ के द्वारा भगवान को यथार्थ जानता है यह सप्तमाध्याय के उपक्रम में निर्देश करके अठारहवें के अन्तमें इस अर्थको सिद्धि प्राप्तो यथा ब्रह्म (सिद्धिको प्राप्त हो ज्ञानी जिस प्रकार से ब्रह्म को प्राप्त करता है सो हमसे सुनो) यहां से आरम्भ कर "यावान् यश्चास्मि तत्त्वतः" यहां तक स्पष्ट किया है।

अब सन्देह यह होता है कि षष्ठाध्यायोक्तयोग के अनुष्ठान से आत्मा को प्राप्त हुआ ही पुरुष पर भक्ति के लाभ के द्वारा भगवत्तत्व को जानने वाला है, यह अठारहवें में कहा

गम्यत इतिचेत् उक्तैर्वाक्यैर्युक्तिभिश्चेत्युच्यते।
यानि योगसाधनानि एकाकी यतचित्तात्मा निरा-
शीरपरिग्रहः। युक्ताहारविहारस्येत्यादीनि षष्ठ
उक्तानि तेषां योगसाधनानां बुद्ध्या विशुद्धया
युक्तो धृत्यात्मानं नियम्य च। शब्दादीन् विष-
यांस्त्यक्त्वा रागद्वेषौ व्युदस्य च। विविक्तसेवी
लघ्वाशी यतवाक्कायमानसः। ध्यानयोगपरोनि-
त्यमित्यादीनामष्टादशेपि दर्शनेनोभयत्रप्रोक्ता-
नां साधनानामैक्यावगमात्। पुनश्च षष्ठे
प्रशान्तमनसंह्येनं योगिनं सुखमुत्तमं। उपैति

---

गया है, यह कैसे जाना जाता है? इसका उत्तर यह है कि उक्त
वाक्यों से और युक्तियों से यह जाना जाता है। क्योंकि जो
योग के साथ में (जो योग के साधन अकेले चित्तको सावधान
कर निराशी आसन रहित संग्रह रहित .....युक्ताहार विहार...)
आदि षष्ठाध्याय में कहे गये हैं उन्हीं योगसाधनों का (विशुद्ध
बुद्धि से युक्त धैर्य से आत्मा को नियमन कर शब्दादि विषयों
को त्यागकरके रागद्वेषको दूर करके एकान्त सेवी लघु आहार
करने वाला मनवचन शरीर को स्वाधीन रखकर नित्यध्यान
योगमें तत्पर होवे। इत्यादि) अठारहवें अध्याय में भी देखने
से ज्ञात होता है कि दोनों साधनों के साथ ऐक्यता है। और
दूसरे छठे अध्याय में—प्रशान्त मनसं (प्रशान्त मन और शान्त

शांतरजसं ब्रह्मभूतमकल्मषमित्यत्र प्राप्तात्मसुखो-ज्ञानी येन ब्रह्मभूतशब्देनोक्तस्तेनैव ब्रह्मभूतशब्दे नाष्टादशेऽप्यात्मसुखं प्राप्तोज्ञानी यस्मात्प्रोक्तः, "विमुच्य निर्ममः शान्तो ब्रह्मभूयायकल्पते। ब्रह्मभूतः प्रसन्नात्मा" इत्यत्र, तस्मादुभयत्रो-क्तसाधनैक्यनिश्चयात् षष्ठोक्तयोगसिद्ध एव परभक्तिप्राप्तिद्वारा भगवद्याथातथ्यस्वरूपं जानातीत्यष्टादश उक्तमिति निश्चीयते। किञ्च तृतीयाद्युक्तनिष्कामकर्मभिर्विशुद्धान्तःकरणः ज्ञान-योगानुष्ठानेनात्मानं प्राप्तो यः ब्रह्मभूतमक-

---

रजोगुणवाले कल्मष रहित ब्रह्मभूत इस योगीको उत्तम सुखकी प्राप्ति होती है ) इसमें आत्म सुखको प्राप्त करने वाले ज्ञानीको ब्रह्मभूत शब्द से जिसने कहा है उसीने अठारहवें अध्याय में भी विमुच्य निर्ममः···इस श्लोक से आत्म सुख प्राप्त ज्ञानीको ब्रह्मभूत शब्द से ही कहा है। इससे ज्ञात होता है कि दोनों जगह साधनों की ऐकयता का निश्चय है। अतः छठवें अध्याय के योग के द्वारा सिद्ध पुरुष ही परभक्ति के प्राप्ति के द्वारा भगवान के यथार्थ स्वरूप को जानता है। यह अठारहवें अध्याय में कहा गया है यह निश्चय होता है।

किंच तीसरे अध्याय में कथित निष्काम कर्मों से जिसका अन्तःकरण शुद्ध हो गया है और जो ज्ञान योग के

ल्मषमित्युक्तः स एव स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते परामित्यारभ्य ब्रह्मभूतः प्रसन्नात्मे त्यन्तेनानुदित इति मूलानुवादरूपेणाप्युभयोः प्रकरणयोरैक्यावगमात् षष्ठोक्तयोग सिद्धिः कश्चिदधिकारीपरभक्तिलाभद्वाराभगवन्तं प्राप्नोतीत्यष्टादशवाक्यादवगम्यत इति यदुक्तं तदुपपन्नतरं। ये त्वक्षरमात्रोपासकास्ते मूर्द्धन्यात्मनः प्राणमाधाय प्रणवं जपन्तस्तद्वाच्यमक्षरं सर्वदा स्मरन्तो देहं त्यजन्ति ते तमेव सदा स्मृतमक्षरं प्राप्नुवन्तीति। यदक्षरं वेदवि-

अनुष्ठान से आत्मा को प्राप्त होगया है और जो "ब्रह्मभूत मकल्मष" यह पद से कहा गया है, वही "स्वे स्वे कर्मण्यभिरत" यहां से आरम्भ करके "ब्रह्मभूतः प्रसन्नात्मा" यहां तक के प्रकरण से अनुवाद किया गया ) इसलिये मूल के अनुवादरूप से दोनों प्रकरणों के ऐक्यता ज्ञात होने से यही निश्चय होता है कि छठा अध्याय के उक्त योग साधनों से सिद्ध कोई अधिकारी ही पर भक्ति के लाभ के द्वारा भगवान को प्राप्त होता है" यह अठारहवें अध्याय के वाक्यों से जाना जाता है यह जो पहले कहा गया था सो सिद्ध हो गया।

जो अक्षर मात्र के उपासक हैं वे मूर्द्धन्य नाडी में अपने प्राणको आधान करके प्रणव का जप करते हुए अक्षर का

दो वदन्ति विशंति यद्यतयोवीतरागाः । यदि-च्छन्तोब्रह्मचर्य्यं चरन्ति तत्ते पदं संग्रहेण प्रवक्ष्ये । सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च । मूर्ध-न्या धायात्मनः प्राणमास्थितो योगधारणाम् । ॐ मित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् । यः प्रयाति त्यजन्देहं स याति परमां गतिमितिवा-क्यतोवगम्यते । अत्र परमागतिशब्देनाक्षरमु-च्यते, अव्यक्तोक्षर इत्युक्तस्तमाहुः परमां गति-मिति तदनन्तरवचनादवगम्यते । अयमक्षरो पासकः देहं त्यत्वा अक्षरमात्रं स्वोपास्यं प्राप्तः

---

सर्वदा ध्यान करके देहको त्यागते हैं वे सदा अक्षर को स्मरण करने से अक्षर ब्रह्म को ही प्राप्त होते हैं।

यह बात "वेद वेत्ता जिसको अक्षर करके जानते हैं वीत रागादि यतिजन जिसमें प्रवेश करते हैं जिसकी इच्छा करते हुए ब्रह्मचर्य का आचरण करतेहैं उस पदको हम आपको संग्रह से कहते हैं। सब द्वारोंको रोककर मनको हृदय में निरोध करके अपने प्राणको मूर्धन्य नाडी में आधान करके योगी योग-धारणा में स्थित होता है। ॐ इस एकाक्षर ब्रह्मका उच्चारण करता हुआ और मेरा स्मरण करता हुआ जो देहको त्यागकर प्रयाण करता है वह परमगति को प्राप्त होता है" इन वाक्यों से ज्ञात होता है। यहां पर परमगति शब्दसे अक्षर ही कहा

सद्योमुक्तिं प्राप्नोति क्रममुक्तिं वा। न प्रथमः, मूर्द्धन्या निसृतस्य सद्योमुक्त्यनुपपत्तेः, यः प्रयाति त्यजन्देहमिति प्रयाति प्रकर्षेण सर्वोत्कृष्टत्वेन यातीत्यनेनार्चिरादिना तद्गतिसूचनात्। उपनिषत्स्वपि अक्षरोपासकानामर्चिरादिगतिश्रुतेस्तदुपपत्तेश्च। तथा च मुंडके श्रूयते तपः श्रद्धे येह्युपवसंत्यरण्ये शांताः विद्वांसो भैक्ष्यचर्यां चरंतः सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मा, परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः

---

गया है क्योंकि अव्यक्ताक्षर इत्युक्तस्त माहु परमांगतिम्। इस अनन्तर वाक्य से ज्ञात होता है यह अक्षर मात्र की उपासना करनेवाला पुरुष देहका त्यागकर अपने उपास्य को प्राप्त हुआ सद्यः मुक्त होता है अथवा क्रमसे मुक्त होता है। इसमें प्रथम कल्प तो हो नहीं सकता क्योंकि मूर्धन्य नाडी से निकलकर सद्यः मुक्ति उपपन्न नहीं सकता, क्योंकि "यः प्रयातित्यजन्देहं" यहां प्रयाति का अर्थ है प्रकर्ष से अर्थात् सर्वोत्कृष्ट से जाना अर्चिरादि मार्ग के द्वारा गति का सूचन करता है।

इससे उपनिषदों में भी अक्षरोपासकों की अर्चिरादि के द्वारा गति सुनी जाने से अक्षरोपासक का अर्चिरादि के द्वाराही जाना उपपन्न होता है। तथा च, मुण्डकोपनिषदमें सुना जाता

कृतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं। तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय ... येनाक्षरं पुरुषं वेद सत्यं तां प्रोवाच तत्वतो ब्रह्मविद्यामिति प्रथममुंडकं। अत्र तपःश्रद्धे ये ह्युपवसन्तीति शान्ता विद्वांसो भैक्ष्यचर्यां चरंत इति संन्यासिन उक्तास्तेषां ब्रम्हनिष्ठगुरूपसत्याब्रम्हविद्यां प्राप्तानां सूर्यद्वारगमनोपलक्षितार्चिरादिनाब्रम्हलोकगति निर्दिष्टा भवतीति विचार्य्य तत्र ये विद्वांसोभैक्ष्यचर्यां चरन्तोऽरण्ये विविक्तदेशे तपःश्रद्धे-

---

है कि "शान्तविद्वान् लोग भिक्षाचरण करते हुए अरण्य में श्रद्धा तप की उपासना करते हैं वे सूर्य द्वार से विरज होकर जहांपर अमृत, अव्यय, आत्मा पुरुष है वहां जाते हैं। कर्मचित लोकों की परीक्षा करके ब्राह्मण वैराग्य को प्राप्त होवे, क्योंकि कर्म से अकृत की प्राप्ति नहीं हो सकती, अतः उस अकृत अर्थात् मोक्ष के जानने के लिये समिधा को हाथ में लेकर श्रोत्रिय ब्रह्मनिष्ठ आचार्य के पास जाये, वह विद्वान् आचार्य पास में प्राप्त हुए अच्छी प्रकार से प्रशान्त चित्त उस शिष्य के लिये यथार्थतया उस ब्रह्मविद्या को कहे जिससे वह शिष्य अक्षर पुरुष का यथार्थ जान जावे" यहां पर "तपः श्रद्धे" इस मन्त्रमें सन्यासी कहे गये हैं क्योंकि ब्रह्मनिष्ठ गुरु की शरण में जाने से

ह्युपवसन्त उपासते ते विरजाः संतः सूर्यद्वारेण यत्रामृतः पुरुषोह्यव्ययात्मा तत्र यांतीत्यर्थो पपत्तेः। तपःश्रद्धयोर्भैक्ष्यचर्यावत्सन्यास्यनुष्ठेयत्वसिद्धेः, मनसश्चेन्द्रियाणां चैकाग्र्यं परमं तपः इत्युक्तेन बाह्यांतरिन्द्रियैकाग्र्यार्थकेन तपःशब्देन शमदमोपरतितितिक्षाणां चतसृणामर्थं संगृह्य श्रद्धाशब्दं च स्फुटमुक्त्वा तपःश्रद्धाभ्यां शान्तो-दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्ये-

---

ब्रह्मविद्या को प्राप्त हुए उन्हींका सूर्य द्वार रूपी अचिरादि मार्गके द्वारा ब्रह्मलोक की गति निर्देश की गई है। यह विचारना चाहिये। क्योंकि जो विद्वान् भिक्षाचर्या का आचरण करते अरण्य अर्थात् एकान्तदेश में तप श्रद्धा की उपासना करते है वे विरज होकर सूर्य के द्वार। जहा पर अव्यय आत्मा, अमृत पुरुष है वहा जाते हैं इससे उपपन्न होता है। तप और श्रद्धा के भिक्षाचर्या की तरह से सन्यासियों के अनुष्ठानकी सिद्धि होती है। अर्थात् ( भिक्षाचर्या सन्यासीके अनुष्ठेय हैं उसी तरह तपः श्रद्धाभी संन्यासी से अनुष्ठेय है )। 'मन और इन्द्रियों का एकाग्र होनाही परम तप है'' इस कथन से बाह्य और अन्तर इन्द्रियों के एकाग्र के अर्थ को प्रतिपादन करने वाले तपशब्द से शम, दम, उपरति, तितिक्षा इन चारों के अर्थ को संगृहीत करके श्रद्धा शब्द को साफ २ कहकर तप- और श्रद्धा से शम

वात्मानं पश्येदिति श्रुत्युक्तं शमादिसाधनं संगृह्य तदुपासकानां सन्न्यासिनां सूर्यद्वारोपलक्षितेनार्चिरादिमार्गेण गतिरुक्ताभवतीति ज्ञेयम्। तथैव तृतीयमुण्डकेऽपि श्रूयते देवयानेन मार्गेण ब्रह्मविदां गतिः आत्मक्रीडः आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यक्ज्ञानेन ब्रह्मचर्य्येण नित्यं, अन्तः शरीरे ज्योतिर्मयोहि शुभ्रोयं पश्यन्ति यतयः क्षीणदोषाः सत्यमेव जयति नानृतं सत्येन पंथा

---

दम उपरति तितिक्षु श्रद्धा धनवाला होकर हमारी तरह आत्मा को देखता है" इस श्रुति में कहे गये शमादि ज्ञान साधन का संग्रह करके तदुपासक सन्यासियों की सूर्य द्वार रूपी अर्चिरादि मार्ग से गति कही गई है यह जानना चाहिये।

इसी प्रकार तृतीय मुण्डकोपनिषद्में देवयान मार्ग के द्वारा ब्रह्मवेत्ताओं की गति सुनी जाती है। "आत्मा में क्रीड़ा और आत्मा में रति करता है और इसीको क्रियावान् है यही ब्रह्म वेत्ताओं में श्रेष्ठ है। परमात्मा के साक्षात्कार में उपकरण विशेषों का विधान करती हुई श्रुति कहती है कि सत्य, तपस्या, सम्यक् ज्ञान और नित्य ब्रह्मचर्य से यह आत्मा प्राप्त होता है जो शरीरके भीतर ज्योतिर्मय शोकमोहादि मालिन्य रहित वर्तमान है जिसको निर्मल चित्त वाले योगिजन देखते

वितनोदेवयानः येनाक्रमन्ति ऋषयोह्याप्तकामाः यत्र सत्सत्यस्यपरमं निधानं बृहच्च तद्दिव्यमचिन्त्यरूपं सूक्ष्माच्च तत्सूक्ष्मतरं विभाति, दूरात्सुदूरेतदिहान्तके च पश्यत्स्विहैष निहितं गुहायां, न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा, ज्ञानप्रसादेन विशुद्धसत्वस्ततस्तु तं पश्यति निष्कलं ध्यायमानः एषोणुरात्मा चेतसा

है। उक्त उपकरणों में से सत्य प्रधान होने से सत्यकी स्तुति श्रुति करती है। सत्य की ही जय होती है अनृतकी नहीं जो विस्तृत देवयान है वह सत्यसे ही मिलता है जिससे द्वारा आप्त काम ऋषिलोग सत्य के परम निधान स्वरूप परमात्मा जहां है वहां को आक्रमण करते हैं उसी को देवयान मार्ग कहते हैं।

( जिस देशमें देवयान मार्ग के द्वारा ऋषि लोग जाते हैं वह परिच्छिन्न है अथवा विकारी है यह सन्देह को निराकरण करती हुई श्रुति उस स्थान का निर्देश करती है कि ) जो सत्य का परम निधान है वह बृहत् है और दिव्य है अर्थात् परिणामी नहीं है अचिन्त्य रूपवाला है सूक्ष्म से भी अति सूक्ष्मतर है दूरसे भी अतिदूर और देखने वालों के गुहामें यहांही अत्यन्त समीपमें है, क्योंकि जो योग साधन के द्वारा साक्षात् करने की सामर्थ्य वाले होते हैं वे इसी शरीर में हृदय गुहामेंहा

वेदितव्यः यस्मिन् प्राणः पंचधा संविवेश, प्राणै-
श्चित्तं सर्वमोतं प्रजानां यस्मिन् विशुद्धविभव-
त्येष आत्मा, यंयं लोकं मनसा संविभाति विशु-
द्धसत्वः कामयते यांश्च कामान्, तं तं लोकं जयते
तांश्च कामास्तस्माद् त्मज्ञं ह्यर्चयेद् भूतिकाम इ-
त्यात्मप्रकरणं समाप्य अथ परमात्मप्रकरणमार-
भ्यते सवेदैतत्परमं ब्रह्म धाम यत्रविश्वं निहित

---

देखते हैं (जब वह गुहामें संनिहित है तो सब कोई उसको क्यों नहीं देखता क्यों कोई कोई ही देखता हैं इस शंका का निराकरण करती हुई श्रुति कहती है कि यह आत्मा (परमात्मा) चक्षु से गृहीत नहीं होता न वचन से न अन्य देवताओं से और तपस्या तथा कर्म से भी गृहीत नहीं होता किन्तु ज्ञान प्रसाद से विशुद्ध सत्व वाला जो पुरुष है वही निष्कल उस पुरुष के ध्यान करने पर देखता है। (ज्ञान प्रसाद से ही जब परमात्मा का साक्षात्कार होता है तो जीवात्मा में ज्ञान है ही है उसे परमात्मा का साक्षात्कार हो जाना चाहिये इस शंका का समाधान करती हुई श्रुति कहती है कि देहाद्यभिमान वश जीवात्मा का ज्ञान कलुषित होगया है अतः परमात्मा को नहीं देखपाता इसलिये पहले जीवात्मा अपने स्वरूप को समझे श्रुति जीवात्माके स्वरूप को बताती है कि ) यह आत्मा अणु है, विवेक शीलमनसे जानना चाहिये .जिस जीवमें प्राण वायु

भाति शुभ्रं, उपासते पुरुषं येह्यकामास्ते शुक्रमेत-
दितिवर्तन्तधीराः। कामान्यः कामयते मन्यमानः
सकामभिर्जायते तत्र तत्र पर्याप्तकामस्य कृतात्मनः-
स्तुइहैव सर्वेप्रविलीयन्ति कामाः, नायमात्मा प्रव-

---

पांचरूप बनाकर उपकरणतया प्रविष्ट हुआ है जिस जीव में प्रजाओं के प्राणों के सहित स्व चित्त ओत प्रोत है। ऐसे जिस विशुद्ध जीवात्मामें यह पूर्वोक्त परमात्मा प्रकाशित होता है। विशुद्ध सत्व वाला जीवात्मा मन से जिस २ लोक का संकल्प करता है और जिस २ कामको चाहता है उस २ लोक को जीत लेता है और उन २ कामों को प्राप्त करलेता है इस लिए ऐश्वर्यकामी पुरुष को चाहिये कि आत्मज्ञ पुरुष की पूजा करे। आत्मवित् की पूजा का मोक्ष फल दिखाती हुई श्रुति कहती है कि जिसमें सम्पूर्ण जीव समुदाय निर्मल स्व प्रकाश हो कर भासित होता है उस सर्व कामास्पद धाम शब्द वाच्य पर ब्रह्म को वह आत्मवित् जानता है। जो पुरुष अकाम होकर आत्मज्ञ पुरुष की मुमुक्षु होकर उपासना करते हैं वे शुक्र को अति क्रमण करके वर्तते हैं अर्थात् जन्म शून्य होजाते हैं और जो कामों को भोग्यतया मानता हुआ कामो (देव मनुष्या-दि भोज्य पदार्थों की) कामना करता है, वह तत् तत् काम परतन्त्र होकर वहां २ पैदा होता है और जो पर्याप्त काम होकर (ब्रह्ममें ही है कामना जिसकी ऐसे विदित आत्मतत्त्व वाले पुरुष के) इसी जन्ममें सब कामनायें लीन होजाती हैं। इस

चनेनलभ्यो न मेधया न बहुनाश्रुतेन यमेवैष वृ-णुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनुं स्वाम्, नायमात्मा बलहीनेन लभ्यो न च प्रमादात् तप-सोवाप्यलिङ्गात् एतैरुपायैर्यतते यस्तु विद्वाँस्तस्यैष आत्मा विशते ब्रह्मधाम। इतोऽग्रे ज्ञानिनां ब्रह्मलोकगातिमाह संप्राप्यैनं संप्राप्यैनं ऋषयो ज्ञानतृप्ताः कृतात्मानो वीतरागाः प्रशान्ताः ते स-

परमात्मा की प्राप्ति केवल प्रवचन, मेधा, बहुश्रुत से नहीं होती है किन्तु यह परमात्मा जिस उपासक को वरण कर लेता है उसी वरणीय से प्राप्य है उसी उपासक को यह परमात्मा अपनी आत्मा का प्रकाश कर देता है, अर्थात् अनुभव करा देता है। यह परमात्मा बलहीन ( चंचलमन ) से प्राप्त नहीं हो सकता है और प्रमादी से प्राप्त नहीं होसकता और आश्रम के चिन्हों से रहित पुरुष को भी प्राप्त नहीं होता किन्तु इन पूर्वोक्त उपायों से जो विद्वान् इस आत्मा की प्राप्ति के लिये यत्न करता है वह उस परमात्मा को प्राप्त कर लेता है (अर्थात् वही जीव परमात्मा के धाम में प्रवेश करता है,) इसके आगे ज्ञानी के ब्रह्मलोक की गति का श्रुति वर्णन करती है। "जे ऋषि ज्ञान से तृप्त हैं और कृत कृत्य होगये हैं रागों से रहित हैं अत्यन्त शान्त हैं वे इस परमात्मा को प्राप्त करके वे धीर पुरुष सबमें व्याप्त सब जगह प्राप्त होने वाले ब्रह्म को सर्वत्रही

र्वगं सर्वतः प्राप्यधीराः युक्तात्मानः सर्वमेवाविशन्ति, वेदान्तविज्ञानसुनिश्चितार्थाः सन्यासयोगाद्यतयः शुद्धसत्वाः, ते ब्रह्मलोकेषुपरान्तकाले परामृता परिमुच्यन्ति सर्वइति । अत्र आत्मक्रीड आत्मरतिः एष ब्रह्मविदां वरिष्ठ इत्यनेनात्मयाथात्म्यज्ञस्य पंथा विततोदेवयानइत्यनेनार्चिरादिमार्गेण येनाक्रमन्ति ऋषयोह्याप्तकामा इत्यनेन योह्यकाम आप्तकामः आत्मकामो न तस्य प्राणा उत्क्रामन्ति अत्रैवसमवलीयन्त इत्युक्तस्याप्यर्चिरादिना गतिं सूचयित्वा वेदान्तविज्ञानसुनिश्चतार्था इत्यादिना ब्रह्मप्राप्त्यनंतरं ब्रह्मणा सह मुक्तिर्निर्दिष्टा भवतीति ध्येयं । किञ्च-

प्राप्त होने वाले ब्रह्मको सर्वत्र ही प्राप्त कर लेते हैं अतः युक्तात्मा वे महात्मा सब में प्रवेश कर जाते हैं अर्थात् सब वस्तु का अनुभव एकही जगह से कर सकते हैं। जिन्होंने वेदान्त के विज्ञान से अर्थ का निश्चय कर लिया है तथा काम्य कर्मों के सन्यास से जिनका अन्तः करण शुद्ध होगया है। वे जितेन्द्रिय महापुरुष अन्तकाल में ब्रह्मलोक में प्राप्त होते हैं तब ब्रह्मा के प्रसन्न होने से सबसे मुक्त होजाते हैं।"

तपः श्रद्धावतां संन्यासिनां सूर्यद्वारपदेन देवयानपदेन यार्चिरादिका गतिः सूचितामुण्डके—सातेषां स्फुटं श्रूयते बृहदारण्ये य एवमेतद्विदुर्ये चामी अरण्ये श्रद्धां सत्यमुपासते ते र्चिरभिसम्भवन्त्यर्चिषोऽहरन्ह

यहां "आत्म क्रीड आत्म रतिः एष ब्रह्मविदां वरिष्ठ" इस वाक्यमें आत्म याथात्म्य ज्ञाता के "पन्थाविततो देवयानः" इस अर्चिरादि मार्ग से "येनाक्रमन्त्यृषयो ह्यात्मकामाः" इस वाक्य से (जो अकाम है आप्त काम है आत्म कामी है उसके प्राण उत्क्रमण नहीं करते किन्तु यहीं पर लीन हो जाते हैं) इस मंत्र से कहे गये योगि की भी अर्चिरादि गति का सूचित करके "वेदान्त विज्ञान सुनिश्चितार्थाः" इत्यादि से ब्रह्म प्राप्ति के बाद ब्रह्मा के साथ मुक्ति का निर्देश किया गया है यह जानना चाहिये।

किंच तपः श्रद्धा वाले संन्यासियों की सूर्य द्वार देवयान पद से अर्चिरादि गति, मुण्डक में सूचित की गई है वह उन संन्यासियों की स्पष्टतया बृहदारण्यक में सुनी जाती है "जो इस प्रकार जानते हैं, औरजो पुरुष अरण्यमें स्थित होकर श्रद्धा पूर्वक सत्य शब्द वाच्य परमात्मा की उपासना करते हैं वे (उत्क्रमण समय पर) अर्चि के अभिमानी देवता से संगत होते हैं वहाँ से दिनके अभिमानी देवता से मिलते हैं, वहां से शुक्ल पक्ष के अभिमानी देवता से मिलते हैं वहां से शुक्ल पक्ष के अभिमानी देवता को प्राप्त होकर उत्तरायण छः महीना के

आपूर्य माणपक्षाद्यान्षण्मासानुदङादित्य एतिमासेभ्यो देवलोकं देवलोका दादित्य मादित्याद्वैद्युतं तान् वैद्युतान् पुरुषोऽमानव एत्य ब्रह्मलोकान्नयति ते तेषु ब्रह्मलोकेषु पराः परवन्तो वसन्ति तेषां न पुनरावृत्तिरिति। तदेवमत्र येनाक्षरं पुरुषं वेद सत्यं तां प्रोवाच तत्त्वतो ब्रह्मविद्यामित्यनेनाक्षरोपासकानपि संगृह्य तेषामप्यर्चिरादिगतिसूचनात्, तपःश्रद्धेये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्ष्यचर्यां चरन्तः सूर्यद्वारेण तेयान्तीति इत्यन्तेन, विविदिषावतां संन्यासिनां

अभिमानी देवता को प्राप्त होते हैं वहांसे सम्वत्सराभिमानी देवता को प्राप्त होकर देवलोक को प्राप्त होता है अर्थात् वायु लोक में जाता है वहांसे आदित्य लोक वहाँ से चन्द्रलोक को प्राप्त होता है, चन्द्रलोक से विद्युत लोक में जाता है विद्युत लोकसे अमानव पुरुष इनको ब्रह्मलोक में प्राप्त करता है। ब्रह्म लोक में प्राप्त हुए वे पुरुष असंकुचित ज्ञान वाले होकर अपने को सनाथ मानते हुए सुख पूर्वक निवास करते हैं, उनकी पुनः आवृत्ति नहीं होती है" इस मन्त्र में "येनाक्षरं पुरुषं वेद सत्यं ताम् प्रोवाच तत्त्वतो ब्रह्मविद्याम्" इससे अक्षरोपासकों का भी संग्रह करके उनकी भी आर्चिरादि गति सूचित की है

आत्मक्रीडः आत्मरति एष ब्रह्मविदां वरिष्ठः सत्येन पंथाविततोदेवयानः येनाक्रमंत्यृषयोह्याप्तकामा इत्यन्तेनात्मानं प्राप्तानामाप्तकामानां चार्चिरादिगतिसूचनात् । ये चामी अरण्येश्रद्धां सत्यमुपासते तेऽर्चिरभि सम्भवन्तीत्यादिना तत्स्फुटीकरणाच्च । सर्वेषामक्षरादिपराणां संन्यासिनामप्यर्चिरादिद्वारैव गतिर्नान्यथेति दृढीकृतं भवति ।

ननुयोऽकाम आप्तकाम आत्मकामः न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयंत इत्युक्त-

---

"तपः श्रद्धेयेह्युपवसन्त्यरण्ये शान्ता विद्वांसोभैक्ष्यचर्यां चरंतः ते सूर्यद्वारेण यांति" इस मंत्र से विविदिषा वाले संन्यासियों के और "आत्म क्रीड, आत्मरतिः एष ब्रह्मविदां वरिष्ठः सत्येन विततो पंथादेवयानः येनाक्रमंति ऋषयोह्याप्तकामाः" इससे आत्मा को प्राप्त आप्तकामों की अर्चिरादिगति सूचित करने से, तथा "ये चामी अरण्ये श्रद्धां सत्यं मुपासते ते अर्चिरभिसंभवन्ति" इस मंत्र से अर्चिरादि गति स्पष्ट करने से सभी अक्षरादि पर संन्यासियों की अर्चिरादि के द्वारा ही गति होती है दूसरी प्रकार से नहीं होती है यह दृढ़ किया गया है ।

स्य नार्चिरादिनागतिरुपपद्यते न तस्य प्राणा उत्क्रामन्तीति श्रुतेरितिचेन्न। आत्मक्रीड आत्मरत ऋषयो ह्याप्तकामा येनाक्रमन्तीत्यात्मानं प्राप्तानामाप्तकामानामप्यर्चिरादिना गतिश्रुतेस्तत्समानार्थकत्वेन तद्वाक्योदितस्याप्याप्तकामादेरर्चिरादिगत्युपपत्त्या न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते इत्युक्तस्यान्यथा सिद्ध्युपपत्तेरितीममर्थं स्पष्टीकरिष्याम्यग्रे।

अत्र निर्विशेषत्वादिभिर्मूर्द्धन्या ध्यायात्मनः प्राणमास्थितो योगधारणामित्यत्राक्षरोपासका

---

यदि कहो कि जो अकाम, आप्तकाम, पुरुष है उसके प्राण उत्क्रमण नहीं करते किन्तु यहीं पर लीन हो जाते हैं, उसकी अर्चिरादि के द्वारा गति उपपन्न नहीं हो सकती क्योंकि "न तस्य प्राणा उत्क्रमन्ति" यह श्रुति कहती है, सो नहीं कह सकते। क्योंकि "आत्म क्रीड आत्मरतिः ऋषयो ह्याप्तकामाः येनाक्रमन्ति" इत्यादि मंत्रों से आत्मा को प्राप्त आत्मकाम पुरुषों की भी अर्चिरादि से गति श्रुत है। पूर्व वाक्य के समानार्थक उस वाक्य से कहे गये आप्तकाम पुरुष की भी अर्चिरादि के द्वारा गति उपपन्न होती है, और "न तस्य प्राणा उत्क्रमन्ति" इसकी सिद्धि दूसरे प्रकार से होती है इसका स्पष्टीकरण आगे चलकर करेंगे।

नामपि मूर्द्धन्या नाड्या गतिः सद्योमुक्तिविरोधित्वेन स्वपक्षहानिकारीति श्रुत्वातद्भयेनयदक्षरं वेदविदोवदन्तीत्यादयोपि त्रयः श्लोकाः सगुणोपासकपरत्वेन व्याख्याताः। कथमितिचेत् उच्यते। सर्वे वेदायत्पदमामनन्ति तपांसि सर्वाणि च यद्वदंति। यदिच्छंतो ब्रह्मचर्यं चरन्ति तत्तेपदं संग्रहेण ब्रवीम्योमित्येतदिति श्रुत्या यदक्षरं वेदविदो वदन्ति विशन्ति यद्यतयो वीतरागा यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्तेपदं संग्रहेण प्रवक्ष इतीत्यस्य श्लोकस्यैकार्थ्यं नि

---

यहां पर निर्विशेष वादियों ने "अपने प्राण को मूर्द्धा में आधान करके जो योग धारणा में स्थित है" इस मंत्र में अक्षरोपासकों की भी मूर्द्धन्य नाड़ी से गति सद्यः मुक्ति की विरोधी होने से अपने पक्ष की हानि करने वाली जानकर उसके भय से "यदक्षरं वेद विदो वदन्ति" इत्यादि तीन श्लोक सगुनोपासक परक करके व्याख्या की है। किस प्रकार व्याख्या की है सो सुनिये—"सम्पूर्ण वेद जिस पद को मनन करते हैं और सम्पूर्ण तप जिसको कहते हैं तथा जिसकी इच्छा करते हुए ब्रह्मचर्य का आचरण करते हैं उस पद को संग्रह से आपसे कहता हूं कि वह पद है ॐ" इस श्रुति से "यदक्षरं··· जिस

देशेन यः पुनरेतत् त्रिमात्रेणोमित्यनेनैवाक्ष रेण परं पुरुषमभिध्यायीत स तमधिगच्छतीत्य नया श्रुत्या तु "ॐमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्" इत्यस्यैकार्थ्यनिर्देशेन चेत्येवमिति तन्नोपपद्यते कुतः विशन्ति यद्यतयोवीतरागा इत्युक्तानां यतीनां यत्नशीलानां संन्यासिनां वीतारागाणां निस्पृहाणां अतएव सिद्धानां तव मते सगुणप्रवेशानुपपत्त्या तद्विषयकाणां यदक्षरं वेदविदोवदन्तीत्यादिश्लोकानां निर्विशेष ब्रह्मपरत्वोपपत्तेर्निर्विशेषपरैरेभिःश्लोकैः सवि-

---

अक्षर को वेद वेत्ता कहते हैं वीतराग होकर यति जिसमें प्रवेश करते हैं, जिसकी इच्छा करते हुए ब्रह्मचर्य का पालन करते हैं उस पद को संग्रह से कहता हूं" इस श्लोक से एकार्थकता का निर्देश होने से और "यः पुनरेतत् जो इस ॐकार रूप त्रिमात्रिक अक्षर से पर पुरुष का ध्यान करता है वह उस पुरुष को प्राप्त होता है" इस श्रुति मे गीता के "ॐ मित्येकाक्षरं······ॐ इस एकाक्षर ब्रह्म का व्याहरण करता हुआ जो हमारा स्मरण करता है वह हमको प्राप्त होता है" इस श्लोक के साथ एकार्थ है इस प्रकार समन्वय करते हुए सगुणोपासक परक इन श्लोकों की व्याख्या की है सो यह व्याख्या

शेषपरयोः सर्वे वेदायत्पदमामनन्तीति यः पुन रेतत् त्रिमात्रेणोमित्यनेनेत्यनयोः श्रुत्योरेकवाक्यतानुपपत्तेः। पुनश्च स याति परमां गतिम् अव्यक्तोऽक्षरइत्युक्तस्तमाहुः परमांगतिमित्यत्राक्षरोपासकस्याक्षरप्राप्तिस्मृतेः य ओँ मित्यनेन परं पुरुषमभिध्यायीत सतमधि गच्छतीत्यत्र परपुरुषोपासनया परपुरुष प्राप्तिश्रुतेः तयोः श्रुत्योः फलविरोधाच्चैकार्थ्यानुपपत्तेः। अत्रापि पुरुषः सपरः पार्थ भक्त्या लभ्यस्त्वनन्ययेत्यनेनाक्षरतः भक्तिलभ्यस्य परपुरुषस्य पृथङ्

---

ठीक नहीं है, क्योंकि—विशन्तियतयो वीतरागाः" इसे कहे गये, यत्नशील निस्पृह संन्यासी अतएव सिद्ध के आपके मत में सगुन ब्रह्म में प्रवेश की उपपत्ति नहीं हो सकती, और तद्विषयक "यदक्षरम्" इत्यादिक श्लोकों को निर्विशेष ब्रह्म परत्व उपपन्न है।

अतः निर्विशेष पर इन श्लोकों के साथ, सविशेष ब्रह्म परक "सर्वे वेदाः······यः पुनरेतत्त्रिमात्रेण ·····इन दोनों श्रुतियों की एक वाक्यता उपपन्न नहीं हो सकती। दूसरे "सयाति परमां गतिम्" अव्यक्तोऽक्षर इत्युक्तस्माहु परमागतिम्" यहां पर अक्षरोपासकों अक्षर ब्रह्म की प्राप्ति स्मृत होने से

निर्देशाच्च पुनः सगुणोपासकानामक्षरप्राप्त्य श्रुतेरस्मृतेरनुपपत्तेश्च त्वयाप्यनंगीकाराच्च मदंगीकारेक्षरभिन्नप्राप्यान्तरालाभेन तवाधिक यत्नवैयर्थ्यापत्तेश्च।

द्वादशे तु सगुणोपासनतोक्षरोपासनायाः पृथग्वर्णनेन निर्विशेषपराणामक्षरोपासना स्फुटीकरणाच्चातोत्र यदक्षरं वेदविदो वदन्तीत्यादिभिः एतद्वै अक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनणवह्रस्वदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसंगमरसमगंधमचक्षु

---

"यः ॐ इत्यनेन परमं पुरुषमभिध्यायी सतमधिगच्छति" यहां पर परम पुरुष की उपासना से पर पुरुष की प्राप्ति श्रवण होने से उक्त दोनों श्रुतियों के फल का विरोध होने से एकार्थ उपपन्न नहीं हो सकता और यहां गीता में भी "पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया" इस श्लोक से अक्षर पद वाच्य से भक्ति लभ्य पर पुरुष का पृथक् निर्देश किया गया है। पुनः सगुनोपासकों को अक्षर प्राप्ति कहीं भी नहीं सुनी गई है न कहीं स्मरण की गई है। अतः सगुनोपासक को अक्षर की प्राप्ति अनुपपन्न है। आप भी इस बात को स्वीकार नहीं करते, यदि आप स्वीकार कर लेवेंगे तो अक्षर से भिन्न दूसरा

स्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखममा-
त्रमनन्तरमबाह्यं न तदश्नाति किञ्चन न तद-
श्नाति कश्चन एतस्य क्षरस्य प्रशासने गार्गि
सूर्याचन्द्रमसौ विधृतौ तिष्ठतः एतस्य वाक्षरस्य

---

प्राप्य है नहीं, अक्षर से भिन्न प्राप्यान्तर के न होने से आपका अधिक यत्न व्यर्थ हो जायगा।

द्वादशाध्याय में सगुणोपासना से अक्षरोपासना का पृथक् वर्णन करने से निर्विशेष ब्रह्मोपासकों के लिये अक्षरोपासना का स्पष्टीकरण किया गया है। अतः यहां पर "यदक्षरं वेद विदो वदन्ति" इत्यादि श्लोकों से हे गार्गी! यह वही है जिसको तुम पूछती हो वह अक्षर है इसको ब्रह्मवेत्ता इस प्रकार कहते है, कि स्थूल, अणु, ह्रस्व, दीर्घ से विलक्षण है, रूप, रस, स्नेह के रहित है, छाया तथा तम से रहित है वायु और आकाश के धर्म से रहित है, संग वर्जित है रस और गंध से रहित है, चक्षु और श्रोत्र की अपेक्षा से इसको ज्ञान नहीं होता है किन्तु (इन्द्रिय निरपेक्ष ज्ञान वाला है) तेज और प्राण से रहित है। मुख रहित है, मात्रा रहित है, भीतर बाहर के विभाग रहित है, न तो वह कुछ खाता है न उसको कोई खाता है। हे गार्गी! इसी अक्षर के शासन में सूर्य चन्द्रमा निराधार आकाश में धारण किये हुए स्थित है इसी अक्षर के शासन में द्यु और पृथ्वी स्थित है, इसी अक्षर के शाशन में हे गार्गी! निमेष, मुहूर्त, अहोरात्र, अर्द्धमास, मास, सम्वत्सर स्थित है, इसी अक्षर के शासन में श्वेत पर्वतों से अर्थात्

प्रशासने गार्गि प्राच्योनद्यः स्यंदते द्यावापृथिव्यौ विधृतौ तिष्ठतः एतस्यवाक्षरस्य प्रशासने गार्गि निमेषा मुहूर्त्ता अहोरात्राण्यर्द्धमासा ऋतवः सम्वत्सरा इति विधृतास्तिष्ठंत्येतस्य वाअक्षरस्य प्रशासने गार्गि प्राच्यो न्यानद्यः स्यन्दन्ते श्वेतेभ्यः पर्वतेभ्यः प्रतीच्योन्यायांयां च दिशमन्वेतस्य वाक्षरस्य प्रशासने गार्गि ददतोमनुष्याः प्रशंसन्ति यजमानं देवार्वी पितरोन्वायत्ता इति श्रुत्युदितस्याक्षरस्य ये उपासका येनाक्षरं पुरुषं वेद तां प्रोवाच तत्वतो ब्रह्मविद्यामिति श्रुत्या निर्दिष्टास्तेषां या गतिरुक्ता इत्येव गम्यते

---

हिमालयादि प्रभृति पर्वतों से प्राची, प्रतीची आदि दिशाओं की नदियां जिस जिस दिशा को बहती हैं वे सब इसी अक्षर की आज्ञा से अनुसरण करती हैं। दान देते हुए यजमान की जो प्रति गृहिता ( दान लेने वाले ) प्रशंसा करते हैं सो इसी अक्षर के शासन से, पुनः इसी अक्षर के शासन से देवता यजमान की पितृगण होम की प्रशंसा करते हैं" इस श्रुति से कहे गये अक्षर के जो उपासक "येनाक्षरं पुरुषं वेद……इस श्रुति से निर्देश किये गये हैं उन्हीं की यह गति कही गई है ऐसा

एतद्वै अक्षरं गार्गि ब्राह्मणा अभिवदन्तीति श्रुत्युपक्रमस्य यदक्षरं वेदविदोवदन्तीत्यस्य चैकार्थ्यात् श्रुत्यर्थानुवादेनास्य ब्रह्मचारिणां यतीनां च तदुपासनयोगधारणादिप्रकाशनाच्च यतीनां तत्रैव प्रवेशोपपत्तेश्च एतदुक्ताक्षरस्योपासनाविधानं विना तत्पराया एतस्याश्रुतेररण्यरोदनत्वापत्तेश्चेति। अस्मिन्पक्षे अक्षरशब्दस्य परमात्मपरत्वमुपपद्यते तस्मिन्नेतस्मिन्नक्षरस्य परमात्मविषयत्वोपपादकपक्षे अष्टमेऽत्र भगवन्मुखाच्छ्रुतामक्षरोपासनां स्मृत्वा द्वादशोपक्रमेऽर्जुनो भगवदुपासकाक्षरोपासकयोः युक्ततम-

---

ज्ञात होता है। क्योंकि "एतत् वै अक्षरं गार्गी ब्राह्मणाअभिवदन्ति" इस श्रुति के उपक्रम के साथ "यदक्षरं वेद विदो वदन्ति" इसकी एकार्थता है। श्रुति के अर्थ के अनुवादक इस वाक्य से ब्रह्मचारी और यतियों के उपासन योग धारणादि का प्रकाशन किया गया है। अतः संन्यासियों का प्रवेश वहीं उपपन्न हो सकता है। इस कही हुई अक्षर के उपासना के विधान के बिना 'तत्पर' इस श्रुति के अरण्यरोदनापत्ति हो जायगी।

त्वज्ञानाय भगवन्तं पृष्टवान् "येचाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः" इतीत्यवगम्यते । यदक्षरं वेदविद इति स्मारकवाक्ये येचाप्यक्षरमव्यक्तमिति तदनुवादके चोभयत्राक्षरपदश्रवणेन तयोरेकार्थपरत्वोपपत्तेः जीवपरमात्मनोः सेवकस्वामित्वेन तदुपासनयोः प्रत्यक्षनिकृष्टत्वोत्कृष्टत्वयोर्युक्ततमत्वायुक्ततमत्वप्रश्नानुपपत्त्या तुल्योपासनयोर्युक्ततमत्वायुक्ततमत्व प्रश्नस्योपपत्तेश्च, ।

---

इस पक्ष में अक्षर शब्द को परमात्म परत्व उपपन्न होता है, इस अक्षर के परमात्म विषयक उपपादक पक्ष में अष्टमाध्याय में श्रीभगवान के मुख से सुनी हुई अक्षरोपासना का स्मरण करके द्वादश के उपक्रम में ही अर्जुन भगवत् उपासक और अक्षरोपासकों के मध्य में कौन युक्ततम है और कौन अयुक्ततम है इस बात के ज्ञान के लिये भगवान से पूछते हैं "येचाप्यक्षरम्" (और जो अव्यक्त अक्षर की उपासना करते हैं उनमें योगवित्तम कौन है ?) यह प्रश्न किया है। इसे जाना जाता है। "यदक्षरं वेद विदो वदन्ति" इस स्मारक वाक्य में और "ये चाप्यक्षरमव्यक्तम्" इस अनुवादकवाक्य में दोनों ही जगह अक्षर पद का श्रवण होने से दोनों ही वाक्यों के एकार्थपरत्व उपपन्न होता है। जीव और परमात्मा के

किंच अस्मिन् पक्षे षष्ठोक्तयोगिनां मध्ये यः कश्चिद्भगवन्तं भजते स अष्टादशोक्तरीत्या परभक्तिद्वारा भगवन्तं प्राप्नोतीति पूर्वमुपादितं अयंत्वष्टमद्वादशोक्ताक्षरोपासकः सदाभ्यस्तयोगोन्तकालेपि योगधारणया देहं त्यक्त्वा सुषुम्नया निर्गत्यार्चिरादिना स्वप्राप्यमक्षरं गच्छति। कुतः अत्र मूर्ध्न्याधायात्मनः प्राणमित्युक्तेः। मुण्डकोपनिषद्यपि अर्चिरादिप्रकरणे येनाक्षरं पुरुषंवेद सत्यं तां प्रोवाच तत्वतो ब्रह्म

---

सेवक स्वामि भाव होने से दोनों की उपासना में प्रत्यक्ष सेही निकृष्ट और उत्कृष्ट होने से युक्ततमं और अयुक्ततम का प्रश्न अर्जुन से हो ही नहीं सकता है अर्थात् जब अर्जुन इस बात को जानताही है कि जीव सेवक है, परमात्मा स्वामि है तब फिर युक्तायुक्त का प्रश्न नहीं कर सकता है। अतः तुल्य उपासना में ही युक्तायुक्त का प्रश्न होसकता है।

किंच इस पक्ष में षष्ठाध्यायोक्त योगियों के मध्य में जो कोई भगवान का भजन करता है वह अष्टादशाध्यायोक्त प्रकार से परभक्ति के द्वारा भगवान को प्राप्त होता है यह पहले ही उपपादन कर दिया है। तथा यह जो अष्टम और द्वादशाध्याय में कहा गया अक्षरोपासक है जो सदा अक्षर की उपा-

विद्यामित्यक्षरविद्योपदेशश्रवणेन तदुपासकाना मर्चिरादिगत्युपपत्तेः। पुनश्च सत्येन पन्था विततोदेवयानः येनाक्रमन्त्यृषयो ह्याप्तकामाः । यत्र तत्सत्यस्य परमं निधानं बृहच्च तद्दिव्यमचिन्त्यरूपं । सूक्ष्माच्च तत्सूक्ष्मतरं विभाति इत्यत्र येनाक्षरं पुरुषं वेदसत्यमित्युक्तस्य ब्रह्मविद्यावेद्यस्य सत्यस्य पुरुषस्य सत्येन पंथा विततोदेवयान इत्यादिना येन देवयानमार्गेण यत्रतत्सत्यस्य परमं निधानं तत्राक्रमन्ति गच्छन्तिऋषयो ह्याप्तकामा। इत्येवमन्वयेनार्चिरादिमार्गेणाप्तकामऋषिप्राप्यत्वद्योतनाच्च। तत्रैव बृहच्च तद्दिव्यमचि

---

सना करते २ योग सिद्ध हो गया है। वह अन्तकाल में भी योग की धारणा से देह को छोड़ कर सुषुम्ना नाड़ी से निकल कर अर्चिरादि मार्ग के द्वारा स्वप्राप्य अक्षर को प्राप्त होता है। क्योंकि यहां पर "मूर्ध्न्याधायात्मनः प्राणम्" यह कहा है। तथा मुण्डक उपनिषद् में भी अर्चिरादि प्रकरण में "येनाक्षरं पुरुषं वेद" इस अक्षर विद्योपदेश के श्रवण से अक्षरोपासकों की ही अर्चिरादि गति उपपन्न है। तथा ( सत्येनेति सत्य से देवयान सत्य से वितत देवयान मार्ग मिलता है जिससे आप्तकाम ऋषिगण प्रयाण करते हैं, जहां पर उस

न्त्यरूप मित्याद्यक्षर पुरुष लिङ्गश्रवणाच्च । पुनश्च तपः श्रद्धे येह्यु पवसन्त्यरण्ये शांता विद्वांसो भैक्ष्यचर्यां चरन्तः सूर्य द्वारेण ते विरजाः प्रयान्ति इत्युक्तानां साधक सन्यासिनां आत्मक्रीडः आत्मरतिं एष ब्रह्मविदां वरिष्ठः सत्येन पंथा विततो देवयानः इत्युक्तानां सिद्धानां च वेद विद्वरिष्ठत्वेन सर्वथा परमात्माक्षरो पासकत्वोपपत्तेश्च कूटस्थाक्षरप्रत्यगात्मोपासकत्वे तेषांवेद विद्वरिष्ठत्वानुपपत्तेश्चेत्यलंपुनःपुनः तद्धठकरणेन ।

---

सत्य का परम निधान है जो बृहत् दिव्य, अभिनयरूप है सूक्ष्म से भी अति सूक्ष्म भासित होता है ) यहां पर येनाक्षरं पुरुषं वेद" इसे कहे गये ब्रह्म-विद्या-वेद्य सत्य पुरुष के "सत्ये न पन्था विततो देवयानः" इसमे जिसे देवयान मार्ग के द्वारा "यत्र तत्सत्यस्य परमं निधानं तत्र क्रमन्ति ऋषयोह्याप्त कामाः" ऐसाही अन्वय करने से अर्चिरादि 'मार्ग' के द्वारा आत्मकाम ऋषियों के प्राप्य स्थान का प्रकाशन किया गया है । और वहीं पर बृहत् दिव्य अचिन्त्य रूप इत्यादि अक्षर पुरुष के चिन्ह भी श्रुत हैं ।

मिथ्याभूतस्य तस्य सत्यस्वरूपब्रह्मत्वभवनायोग्याच्च । जीवाभासत्ववादिनस्तवपक्षे तस्य वस्तुभूतब्रह्मरूपत्वतद्विरुद्धाभासभूतसर्वरूपत्ववादिन्यां श्रुतावुन्मत्तवचनमिवाऽप्रामाण्यापत्तेश्च । तथा 'ब्रह्मविद्यया सर्वरूपभवनवचनमपि तव पक्षे व्यर्थं ब्रह्मज्ञानस्य बहूनां पुण्यजन्मनामन्ते जातस्यावस्तुभूतसर्वभवनफलकत्वापत्तेः सर्वस्य वस्तुत्वासत्यत्वास्वीकारेऽद्वैतबाधाच्च । ज्ञानेनवस्तुभूतस्य स्वरूपनाशानुपपत्तेश्च । वस्तुनोवस्त्वन्तरमेलने तदाधिक्योपपत्त्या ब्रम्हणि

---

कहना होगा, और वस्तु-स्वरूप न होने से मिथ्या भूत उसके सत्य स्वरूप ब्रह्म की भावना करना भी असत्य है। आभास स्वरूप जीवको मानने वाले आपके पक्षमें उसके वस्तु भूत जो ब्रह्म तद्रूपता और उससे विरुद्ध आभासभूत, सर्व रूपता को कहने वाली श्रुतिमें अप्रामाण्य आजायगा, जैसे उन्मत्त के वचन में प्रामाण्य नहीं है। तथा अविद्या से ब्रह्म सर्व रूप होजाता है, यह बचन भी आपके पक्ष में व्यर्थ होजायगा। बहुत से पुण्यमय जन्मों के अन्त में जायमान ब्रह्मज्ञान के अवस्तु भूत सर्व रूप होनेकी आपत्ति आजायगी और यदि सभी में वस्तुपना और सत्यता स्वीकार कर लेवें तो आपके अद्वैत का ही बाध होजायगा और फिर ज्ञान से वस्तुभूत

विकारित्वापत्तेश्च । तस्यौपाधिकत्वेनाभासरूपत्वेपि स्वरूपभूतब्रह्मरूपत्वेन सत्यत्वमविनाशित्वं चोच्यते इति चेन्न तथा सति तदौपाधिकत्वछद्मकल्पनाया वैयर्थ्यात् ब्रह्मैव स्वाविद्यया संसरतीत्यवशेषात् कथमपि तन्मोक्षानुपपत्तेः यथा स्वेच्छया संसरति तथा स्वेच्छयैव मोक्ष्यतीति वक्तव्यत्वेन ब्रह्मज्ञानोत्पत्ति-साधन-संद-

पदार्थ के स्वरूप से नाश नहीं होता है। वस्तु में यदि वस्त्वन्तर मिल जाय तबतो उसमें अधिकता आजायगी। जैसे एक सेर जल में एक सेर जल अथवा चीनी मिलादी जायतो उसका वजन दो सेर अवश्य होजायगा। इसी प्रकार ब्रह्म में जब वस्तुभूत इन सबका मेल होगा तो ब्रह्म में विकारिता आजायगी।

यदि कहे कि यह वस्तु स्वरूप सर्व जगत औपाधिक होने से आभास रूप है, स्वरूप भूत ब्रह्म के रूप में मिलने पर भी ब्रह्म के रूप में किसी प्रकार का विकार नहीं आता, और ब्रह्म में सत्यत्व अविनाशित्व, सुरक्षित रहता है, यदि यह कहो तो सो नहीं कह सकते, क्योंकि औपाधिक कपट की कल्पना व्यर्थ है, ब्रह्म ही अपनी अविद्या से संसारी होजाता है। यह शेष रह जाने से किसी प्रकार इसका मोक्ष नहीं होसकता है। यदि कहें कि जैसे अपनी इच्छा से संसारी होता है उसी प्रकार अपनी इच्छा सेही मुक्त भी होजायगा। ऐसा कहने से ब्रह्म ज्ञान उत्पादन करने के जितने भी साधन समुदाय है, वह

दभ वैयर्थ्यापत्तेश्च। यथा ब्रह्मरूपत्वं प्राप्त तथा जीवोपि ब्रह्मविद्यया सर्वरूपत्वं प्राप्नोतीत्यपि न ब्रह्मणः स्वाऽज्ञानेन सर्वरूपप्राप्तत्वमिवजीवस्यापि ब्रह्मज्ञानेनैवानादिकालतः सर्वरूपत्व-प्राप्तत्वेन तत्र ब्रह्मविद्यायाः हेतुत्वस्य निष्प्र-योजनत्वात् शुद्ध-ब्रह्म-प्राप्तिफलकस्य ब्रह्म-ज्ञानस्य तदौपाधिकत्वेन मिथ्याभूतसर्वरूपत्व-प्राप्तिफलकत्वायोग्याच्च।

सर्वभवनवचनं ब्रह्मविद्याया अर्थवाद इत्यपि न तत्र तच्छेषिविधिवचनाश्रवणात्। पुनः

---

सब व्यर्थ हो जायगा यदि कहें कि जैसे ब्रह्म सर्व रूपता को प्राप्त होजाता है, वैसेही जीव भी ब्रह्म विद्या से सर्व रूप को प्राप्त होजाता है, सो नहीं कह सकते, क्योंकि ब्रह्म जैसे अपने अज्ञान से सर्व रूप को प्राप्त हुआ है वैसेही जीव भी ब्रह्म ज्ञान से ही अनादि काल से सर्व रूपको प्राप्त है ही, उसमें ब्रह्म विद्या को कारण मानना निष्प्रयोजन है। यदि शुद्ध ब्रह्म को प्राप्ति कराने वाले ब्रह्म ज्ञान को माने तब तो उस ब्रह्म ज्ञान के औपाधिक होने से मिथ्या भूत सर्व रूपता प्राप्ति रूप फल के अयोग्य होगा।

यदि कहें कि ब्रह्म विद्या से सर्व रूप होने का जो वचन है वह, अर्थ वाद मात्र है सो मान नहीं सकते क्योंकि वहां पर

तस्मिन् वाक्ये फलान्तराश्रवणेन तस्या ब्रह्मवि-
द्यायाः प्रशंसामात्रफलकत्वापत्ते श्चेत्याद्यन्यद-
प्यूह्यं ।

तदेवमद्वैतपरत्वे न भास्य मानानां श्रुती-
नामन्यथासिद्धे र्नतदवष्टंभेनाद्वैतं सिध्यति नापि
काचिन्मोक्षपरा श्रुतिरभेदमोक्षपरत्वे नोपलभ्यते
तत्तदुपासक परत्वोपत्तेः । तथाहि तत्सुकृतदु-
ष्कृते विधुनुते इतीदं वचनं कौशीतक्युप-
निषदि विरजा पारगतोपासकपरत्वे नश्रूयते ।

---

उस अर्थ वाद का शेषी विधि वचन सुना नहीं गया है पुनः उस वाक्य में फलान्तर भी नहीं सुना गया है, और उसको ब्रह्म विद्या की प्रशंसा मात्र परकता आजायगी, इत्यादिक दोषों की कल्पना करनी चाहिये । इसलिये अद्वैत परकतया भास मान श्रुतियों की सिद्धि अन्य प्रकार से भी होजायगी, इसलिये उन श्रुतियोंके बल से अद्वैत की सिद्धि कथमपि नहीं होसकती, तथा कोई भी ऐसी श्रुति देखने नहीं आती जो श्रुति मोक्ष काल में जीव ईश्वर के अभेद को ही मोक्ष मानती होवे । तत्तत् उपासना प्रकरण में देखी गई उन श्रुतियों के तत्तत् उपासक परकता ही है, तथाहि—"तत्सुकृत दुष्कृते विधुनुते" अर्थात् वह सुकृत और दुष्कृत को नाश कर देता है, यह वचन कौशीतकी उपनिषद में विरजा के पार गये हुए उपासक को कहता है ।

मुण्डके तु द्वासु पर्णासयुजा सखाया समानं वृक्षं-परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥ समाने वृक्षे पुरुषो-निमग्नोनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीत-शोकः । यदा पश्यः पश्यते रुक्मवर्णं कर्त्तारमीशं पुरुषं ब्रम्हयोनिं । तदा विद्वान् पुण्यपापेविधूय निरंजनः परमं साम्यमुपैतीतीदं वाक्यमीशस्य-सेव्यत्वं तत्सेवकस्य तद्दर्शनकृतपुण्यपापराहित्येन तत्साम्यं तत्साधर्म्यं स्पष्टं वदति तदनन्तरं तस्य सेवकस्यार्चिरादिना गतिर्निर्दिशति च प्राणोह्येष सर्वभूतैर्विभाति विजानन् विद्वान् भवते नातिवादी । आत्मक्रीड़ आत्मरतिः क्रियावानेष

---

और मुण्डकोपनिषद् में "द्वासुपर्णा सयुजासखाया······यहां से लेकर "निरंजनः परमं साम्य मुपैति" यहां तक के मूलोक्त वाक्य ईश्वर में सेव्यता को प्रतिपादन करता है और ईश्वर सेवक के ईश्वर के दर्शन से पुण्य और पाप से रहित हो कर ईश्वर के साम्य, ईश्वर के ऐसा धर्म को स्पष्टतया प्रतिपादन करता है, और इसके बाद उस सेवक की अर्चिरादि मार्ग के

ब्रह्मविदां वरिष्ठः। सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यं। अंतः शरीरे ज्योतिर्मयोहि शुभ्रोयं पश्यन्ति यतयः क्षीणदोषाः। सत्यमेव जयति नानृतं सत्येन पन्था विततोदेवयानः। येनाक्रमन्त्यृषयोह्याप्त-कामाः यत्र तत्सत्यस्य परमं निधानमित्येत-द्वाक्यम्।

काठके तु भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्व-संशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे। शतं चैका हृदयस्य नाड्य तासां मूर्द्धा-नमभिनिःसृतैका। तयोर्द्ध्वमायन्नमृतत्वमेति विश्वगन्या उत्क्रमणे भवन्तीति परमपुरुषदर्श-नवतः मूर्द्धन्या नाड्या गतिश्रवणेनार्चिरादिना

---

द्वारा गति का निर्देश। "प्राणोह्येषसर्वभूतैर्विभाति विजानन् विद्वान् भवते नति वादी" इत्यादि मूलोक्त वाक्य कहते हैं। तथा कठोपनिषद्में, "भिद्यते हृदयग्रन्थिः·····शतं चैका हृदय स्नाड्यः" इत्यादि वाक्य से परम पुरुष का दर्शन करने वाले जीवकी मूर्धन्या नाड़ी से गति को बताकर अर्चिरादि मार्ग के द्वारा गति बताई गई है इसलिये इसी के समान होने से

गत्यवगमात् तत्सामान्यान्मुण्डकेऽपि परं पुरुषं पश्यतोमूर्द्धन्यानिःसृत्यार्चिरादिमार्गेण गतिरुपपद्यते। पश्नोपनिषदि तु यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परमपुरुषमभिध्यायीत स तेजसि सूर्ये सम्पन्नो यथा पादोदरस्त्वचा विनिर्मुच्यते एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परात्परं पुरुषमीक्षते, इतीदं वाक्यमोंकारद्वारा परमपुरुषध्यानवतः सर्वपापराहित्यपूर्वकब्रह्मलोकं प्राप्तस्य परमपुरुषदर्शनं श्रावयति।

ऐतरेये तु यत्किंचेदं प्राणिजंगमं च पतत्रि

---

मुण्डक में भी परम पुरुष को देखते हुये भक्त मूर्धन्य नाडी से निकल कर अर्चिरादि मार्ग के द्वारा गमन करता है।

पश्नोपनिषदमें "यः पुनः एतन् त्रिमात्रेण ॐ इत्यनेनैव अक्षरेण परम पुरुषं अभिध्यायीत स तेजसिसूर्ये सम्पन्नो ······ ···यह वाक्य ॐकार के द्वारा परम पुरुष का ध्यान करने वाले पुरुष को सर्व पाप रहितपूर्वक ब्रह्म लोक में प्राप्त होताहै। और परम पुरुष का दर्शन करता है यह बताता है, इसी प्रकार ऐतरेयो पनिषद् में यत्किंचेदं प्राणि जंगमं च पतत्रिच····· यह वाक्य प्रज्ञानं ब्रह्म इस महावाक्य के अर्थ का प्रकाशक है। प्रज्ञा

चयच्च स्थावरं सर्वं तत्प्रज्ञानेत्रं प्रज्ञाने प्रति-ष्ठितं प्रज्ञाने त्रिलोकप्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म स एतेन प्राज्ञेनात्मनास्माल्लोकादुत्क्रम्यामुष्मि-न्स्वर्गे लोके स सर्वान् कामानाप्त्वामृतः सम-भवदितीदं वाक्यं प्रज्ञानं ब्रह्मेति महावाक्यार्थ-प्रकाशकं । प्रज्ञानेत्रोलोकः प्रज्ञाप्रतिष्ठाइत्या-भ्यां प्रज्ञानेत्रः नेत्रइव सर्वप्रज्ञानियम्यः सृष्टि-काले सर्वकाले वा प्रज्ञाप्रतिष्ठा तु स्थितिकाले प्रलयकाले चेत्यर्थकाभ्यांस्थावरजंगमात्मक-समस्तजगत्स्वरूपस्थितिप्रवृत्ती प्रज्ञा शब्दवाच्य-

नेत्रो लोकः, प्रज्ञाप्रतिष्ठा, इन दोनों पदों से नेत्र की तरह से सब प्रज्ञाओं का नियामक है, सृष्टि काल में अथवा सब काल में प्रज्ञा ही प्रतिष्ठा है अर्थात् स्थिति काल अथवा प्रलय काल में प्रज्ञा में ही सब पदार्थ प्रतिष्ठित होजाते हैं। इस अर्थ वाले पूर्वोक्त दोनों वचनों से स्थावर और जंगमात्मक समस्त जगत् को स्वरूप स्थिति और प्रवृत्ति प्रज्ञा शब्द वाच्य परमात्मा के आधीन है इस बात को बताता हुआ यह ऐतरेय मंत्र यह भी बताता है कि पूर्वोक्त ज्ञान सम्पन्न पुरुष प्रज्ञा ब्रह्म का चिन्तन करने वाले पुरुष के देह के अंत में इस लोक से मूर्धन्य नाडी से उत्क्रमण कर "स्वः पद वाच्य लोकमें जिसका ज्ञान किया जाय उसको स्वर्ग कहते हैं" उसपर पद वाच्य स्वर्ग लोक में

परमात्माधीने प्रकाशयन् एतज्ज्ञानपूर्वकं प्रज्ञब्रह्म चिन्तकस्य देहान्ते अस्माल्लोकान्मूर्धन्योत्क्रम्य स्वः गीयते इति स्वर्गस्तस्मिन् स्वर्गे परं पदाख्ये लोकेगतस्य सर्व कामावाप्तिं अमृतपदोक्ता मरणधर्मकत्वेनापुनरावृत्तिं च. स्फोटयति अत्र लोकेतिपद लोकवाचकं वा देहपरं वोभयथापि न काचिद्धानिः। अमुष्मिन्निति लोक इति च पदाभ्यां विशेषितं स्वर्गपदं तु स्थानविशेषस्यैव वाचकं भवितुमर्हति न त्वर्थान्तरस्य तस्यार्थान्तरत्वकल्पनायां अस्मादिति अस्मिन्निति चानयोः पदयोरत्यन्तवैयर्थ्यापत्तेर्लोकादिपदानां

---

गये हुए पुरुष को सब कामों की प्राप्ति और अमृत पदोक्त मरण धर्म राहित्य होने से "अपुनरावृत्ति" स्पष्ट करता है। यहां पर लोक शब्द का अर्थ चाहे लोक करे अथवा उसको देह परकमाने दोनों ही अर्थ में कोई भी हानि नहीं है। और अमुष्मिन्, और लोके, इन दोनों पदों से विशेषित स्वर्ग पद तो किसी स्थान विशेष का ही वाचक हो सकता है। दूसरे अर्थ का वाचक नहीं है, यदि अर्थान्तर की कल्पना भी करें तो 'अस्मात्' और अमुष्मिन् इन दोनों पदों की अत्यन्त व्यर्थता हो जायगी और लोकादि पद भी व्यर्थ हो जायेंगे।

च वैयर्थ्यापत्तेः । न चोक्तपदानामर्थवादमात्रपरत्वं कल्पितुं शक्यं तत्र तत्फलान्तराश्रवणात् । तत्त्वमस्यादि वाक्यैरस्य प्रज्ञानं ब्रह्मेति वाक्यस्यैकवाक्यत्वयोग्यत्वाच्च । सम्भवति मुख्यार्थे उक्तपदानामर्थान्तरपरत्वकल्पनायाः अन्याय्यत्वात् ।

छान्दोग्येतु तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयं स यां प्रथमामाहुतिं जुहुयात्तां जुहुयात् प्राणाय स्वाहेति प्राणस्तृप्यति प्राणे तृप्यति चक्षुस्तृप्यति चक्षुषि तृप्यत्यादित्यस्तृप्यत्यादित्ये तृप्यति द्यौस्तृप्यति दिवि तृप्यति यत्किंचिद्यौश्चादित्यश्चाधितिष्ठतस्तत्तृप्यति तस्यानु

---

यदि कहें कि हम उक्त पदों को अर्थवाद मात्र ही परत्व मानेंगे, सो मान नहीं सकते, क्योंकि फलान्तर कोई भी श्रुत नहीं है। तत्वमस्यादि वाक्यों के साथ प्रज्ञानं ब्रह्म इस वाक्य की एक वाक्यता मानी गई है । तथा मुख्य अर्थ के सम्भव होनेपर उक्त पदों का अर्थान्तर कल्पना करना अन्याय है। छान्दोग्य उपनिषद में, तद्यद भक्तं प्रथमागच्छेत्······यहां से प्रजया पशुभिः अन्नाद्येनतेजसा ब्रह्मवर्चसा इत्यादि से क्रम से

तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेत्यादिना क्रमेण प्राण-व्यानापान-समानोदानार्थाहुतिभिः क्रमेण चक्षुषः श्रोत्रस्य वाचः मनसः वायोश्च तृप्तिद्वारा क्रमेण द्युमा-दित्ययोः दिक्चन्द्रमसोः अग्निपृथिव्योः विद्युत् पर्जन्ययोः वाय्वाकाशयोः तृप्त्या तत्तदधिष्ठित-समस्तजगत्तृप्तिमुक्त्वाऽऽहयदिश्या स य इदमविद्वान-ग्निहोत्रं जुहोति यथांगाराऽनपोह्य भस्मनि जुहुयात्तादृक्तत्स्यात । अथ एतदेवं विद्वानग्नि-होत्रं जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वे-ष्वात्मसु हुतं भवति तद्यथेषीकातूलमग्नौ प्रोतं

---

प्राण, व्यान, अपान, समान, उदान, रूप, पंचप्राणों के लिये आहुतियों से क्रम से नेत्र, श्रोत्र, वाक, मन, वायु की तृप्ति के द्वारा द्यु सूर्य, दिशा चन्द्रमा, अग्नि और पृथ्वी, विद्युत और पर्जन्य, वायु और आकाश की तृप्ति से इनसे अधिष्ठित समस्त जगत की तृप्ति को कहकर स. य इदमविद्वानग्नि होत्रं जुहोति तथांगारा न पोह्य भस्मनि जुहुयात्········यहां से आरंभकर एवं सर्वाणि भूतान्यग्नि होत्र मुपासते" यहाँ तक के मंत्रो में अग्नि होत्र की उपासना बताई गई है। इसमें "य एतदेवं विद्वान्" इससे प्राणादि की आहुतियों से अनुरादि की तृप्ति

प्रदूयेतैव हास्य सर्वे पाप्मानः प्रदूयन्ते य एतदेवं विद्वानग्निहोत्रं जुहोति तस्मादुहैवं विद्यद्यपि चांडालायोच्छिष्टं प्रयच्छेदात्मनि हैवास्य तद्वैश्वानरे हुतं स्यादिति। तदेष श्लोको यथेह क्षुधिता बाला मातरं पर्युपासते एवं सर्वाणि भूतान्यग्निहोत्रमुपासत इत्येतदन्ते तत्र य एतदेवं विद्वानिति प्राणाद्याहुतिभिः चक्षुरादितृप्तिपरंपरया सूर्याद्यधिष्ठितस्य सर्वस्य जगतस्तृप्तिर्भवतीति विद्वान् प्राणाद्याहुतीनां चक्षुरादिपरंपरया सर्वलोकसर्वभूतसर्वात्मसु पर्यवसानात् ताभिरुक्त

---

की परम्परा से सूर्यादि से अधिष्ठित सम्पूर्ण जगत की तृप्ति होजाती है ऐसा जानने वाला पुरुष को यह निश्चय होता है कि प्राणादि की आहुतियों की चक्षुरादि परम्परा से सम्पूर्ण लोक सर्वभूत सर्व आत्मा में पर्यवसान होने से उन आहुतियों से उक्त परम्परा के द्वारा सर्व लोक सर्वभूत, सर्व आत्माओं की तृप्ति होती है, प्राणादिक आहुति के द्वारा सब लोकों के आहुति होजाने से सबकी तृप्ति होजाती है, ऐसा जानने वाला ये सब विद्वत् शब्द का अर्थ हुआ, इस प्रकार से जानने वाला विद्वान् अग्नि होत्र का हवन करता उसके सब पाप जल जाते हैं, यह बात स्वयमेव "तद्यथेषीका तूलम्" इत्यादि श्रुति कहती है

परं परया सर्वलोकसर्वभूतसर्वात्मनां तृप्ति-
र्भवतीति प्राणाद्याहुतिभिः सर्वलोकाद्याहुतितया
तत्तृप्तिश्चभवतीति विद्वानिति द्वितीयविद्वच्छ-
ब्दार्थः। य एवंभूतोविद्वानग्निहोत्रं जुहोति
तस्य सर्वं पापं दह्यतइत्याह स्वयमेव श्रुतिः तद्य-
थेषीकातूल मित्याद्या तस्यैवंभूतस्य विदुषः सर्व-
मपि कृत्यं वैश्वानरतृप्तिहेतु र्भवतीत्याह तस्मादु-
हैवं विद्यद्यपि चाराडालायेत्यारभ्य तद्वैश्वानरे
हुतं स्यादित्यंतेन। अत्र वैश्वानरतृप्तिस्तस्य सर्व
पापविमोके हेतु र्भवतीत्यवगम्यते। पुनस्तत्रैव
छान्दोग्ये श्रूयते किं नु सोम्य किलते

---

तथा इस प्रकार से जानने वाले विद्वान् के समस्त कृत्य वैश्वा-
नर की तृप्ति के हेतु होते हैं। इस बात को तस्माद् हैवं" यहां
से आरंभ कर "तद्वैश्वानरे हुतं स्यात्" यहाँ तक की श्रुति ने
कहा है। यहाँपर वैश्वानर की तृप्ति उस विद्वान् के सब पापों
के नाश करने में हेतु होती है, यह निश्चय होता है।

फिर भी उसी छान्दोग्य में "किन्नु सोम्य किलते अवो-
चन" यहां से आरंभ कर "एतेन प्रतिपद्यमाना, इमं मानवा वर्त
नावर्तंते" यहां तक के मंत्र मूलोक्त हैं, वहां यथा पुष्कल पलाशं
इत्यादि श्रुति यह बताती है कि जैसे नेत्र में छोड़ा हुआ घृतादि

ऽत्रोचन्निनीदमितिह प्रतजज्ञे लोकान्वाव किल सोम्यतेऽवोचन्नहं तु ते तद्वक्ष्यामि यथा पुष्कर-पलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यत इति ब्रवीतु मे भगवानिति तस्मै होवाच य एषोक्षिणि पुरुषो दृश्यते एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मे ति तद्यद्यप्य स्मिन्सर्पिर्वोदकं वा सिंचति वर्त्मनी एवगच्छ-त्येतं संयद्वाम इत्याचक्षत सर्वाणि वामान्यभि-संयंति सर्वाण्येनं वामान्यभि संयंति सर्वाण्येनं वामान्यभि संयंति य एवं वेदैष उ एव वामनी

---

उसका श्लेष न करके नत्र सम्बन्ध रास्ता में ही चला जाता है उसी प्रकार नेत्र आन्तर वर्ति पुरुष के ब्रह्मरूप के यथार्थ रूप न जानने वाले उपासक को पाप कर्म श्लेष नहीं करता किन्तु उस उपासक के द्वेषी के पास में चला जाता है, क्योंकि द्विषन्तः पाप कृत्याम्" इस दूसरी श्रुत्यन्तर से भी निश्चय होता है, और जिस उपासक के पाप श्लेशन नहीं करते उस उपासक के देह के अन्त में अर्चिरादि मार्ग के द्वारा ब्रह्म की प्राप्ति होती है इस बात को "अर्चिषमेव सम्भवन्ति" इस मंत्र से स्फुट किया। यहां पर "यथेषीकातूल मग्नौ प्रोत, यथापुष्कर पलाशे" इत्यादि वाक्य तत्तत् उपास्य स्वरूप वेत्ता के महात्म्य को और तत्तत् उपासक महात्म्य को कहते हैं, और कैमुत्य न्याय से सब से

रेषहि सर्वाणि कर्मफलानि वामानि नयति सर्वाणि वामानि नयति य एवं वेदैष उ एव भामनी रेषहि सर्वेषु लोकेषु भाति सर्वेषु लोकेषु भाति य एवं वेदाथ यदु चैवास्मिच्छव्यं कुर्वन्ति यदि-चनार्चिषमेवाभि संभवन्त्यर्चिषोहरन्ह आपूर्य माण शुक्लपक्षमापूर्यमाणमक्षाद्यान् षडुद-ङेति मासांस्तानमासेभ्यः सम्वत्सरं सम्वत्स-रादादित्यमादित्याच्चन्द्रमसं चंन्द्रमसोविद्युतं तत्पुरुषो मानवः स एतान् ब्रह्मगमयतेष.देवै-रथ्यादिभि·नीयमानः पथः देवपथोब्रह्मपथ एते

---

उत्कृष्ट विशिष्ट ब्रह्म स्वरूप वेत्ता और उस उपासक के माहात्म्य के वर्णन करने में भी पर्यवसित होते हैं। यदि पूछा ? कैसे, तो जो वाक्य वैश्वानर अन्तर्यादि उपाधिक परम पुरुष स्वरूप ज्ञात उपासक के इस प्रकार के महिमा को कहते हैं, वे सब वाक्य "रमन्ते योगिनोऽनते ·····अर्थात् अनंत सत्यानन्द चिदात्मा में योगि जन रमण करते हैं इसी लिये राम पद से परब्रह्म का अभिधान होता है। जो चिन्मय है; अद्वितीय है, निष्कल है तथा तथा शरीर से रहित हैं, वेही ब्रह्म उपासकों के कार्य के लिये रूपकी कल्पना करते है। सत्य ज्ञान, अनन्त, स्वरूप ब्रह्म हैं। जो इस बात को जानता है कि ब्रह्म सबकी गुहा ( हृदयदेश )

न प्रतिपद्यमाना इयं मानवमावर्तनावर्तंते नावर्तंते इत्येतद्वदन्तं । तत्र यथा पुष्करपलाश इत्याद्या श्रुतिः यथाक्षिणि सिंचितं घृतादिकं तदश्लिष्य- तत्सम्बन्धिनि वर्त्मनि एव गच्छति तथाक्षिपुरुष- रूपयाथात्म्यविदं तदुपासकमश्लिष्य पापं कर्म तद्विषि निगच्छति द्विषन्तः पापकृत्यामिति श्रुत्य- न्तरादिति वदन्ती तस्याश्लिष्टपापस्य देहान्ते अर्चिरादिमार्गेण ब्रह्मप्राप्तिं स्फुटत्यर्चिषमेवाभि- सम्भवन्तीत्यादिना ।

---

में निहित है, वह ब्रह्म के साथ सब कामो को भोगता है, इत्येव मादि वाक्यों में बताये गये निरुपाधिक सर्वोत्कृष्ट विशिष्ट रामाख्य ब्रह्म हैं । उनके स्वरूप के जानने वाले उपासक को पूर्व के उपासक से अधिक महात्म्य वर्णन करने में निश्चय प्राप्त हुआ है, तब पूर्वोक्त उपासक के लिये तो कहना ही क्या है ।

यहां पर जो कोई आधुनिक इस बात को कहते हैं कि वेदों में श्रीरामजी और श्रीकृष्णादिकों की उपासना नहीं सुनी जाती है वे मन्द मति हैं वेद के एकदेशीय पक्षका कहते हैं इसलिये अनादरणीय हैं क्योंकि श्रीरामत पिनियोपनिषद आदिकों में श्रीरामजी के उपासनाके प्रति पादक वाक्य प्रसिद्धही है ।

अत्र यथेषीकातूलमग्नौ प्रोतं यथा पुष्कर-पलाश इत्येवमादीनि वाक्यानि तत्तदुपास्यस्व-रूपवित्तत्तदुपासकमाहात्म्यं वदन्ति सन्ति कैमु-त्यन्यायेन सर्वोत्कृष्ट-विशिष्टब्रह्मस्वरूपवित्तदुपा-सकमाहात्म्यवर्णनेपि . पर्यवस्यन्ति। कथमिति चेत् यानि वाक्यानि वैश्वानराद्याद्युपाधिक-परपुरुषस्वरूपविदस्तदुपासकस्येदृश महिमानं वदन्ति तानि सर्वाणि रमन्ते योगिनोऽनंते सत्यानन्दे चिदात्मनि । इति रामपदेनासौ परं ब्रह्माभिधीयते । चिन्मयस्याद्वितीयस्य निष्कल-स्याशरीरिणः । उपासकानां कार्य्यार्थं ब्रह्मणो-रूपकल्पना। सत्यं ज्ञानंमनन्तं ब्रह्म यो वेद निहितं गुहायां सोश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेत्येवमादिवाक्ये बोधितनिरुपाधि-कसर्वोत्कृष्टविशिष्टरामाद्याख्यब्रह्मस्वरूपविदस्त-दुपासकस्य ततोप्यधिकमाहात्म्यवर्णने पर्यवस्यं त्विति किं वक्तव्यमित्येवं अत्रयेऽर्वाचीना केचि-

द्वदन्ति वेदेषु श्रीरामकृष्णाद्युपासना न श्रूयते इति ते मन्दमतयोवेदैकदेशित्वेनानादरणीयाः श्रीरामतापनीयोपनिषदाद्यासु श्रीरामउपासना-वाक्यप्रसिद्धेः ।

ननु भवतु वत्तथा किंतु तथैव तानि वा-क्यानि निर्विशेषब्रह्मविदितभेदप्राप्तेऽपि ज्ञानिनि पर्यवस्यंतीतिचेन्न तत्त्वमस्यादिवाक्यानां नि-र्विशेषब्रह्मपरत्वानुपपत्त्या विशिष्टब्रह्मपरत्वस्या-नेकधादर्शितत्वात् वाक्यान्तरस्य तत्परत्वान.

यदि कहें कि उक्त उपनिषदों से प्रतिपादित उपासनादि रूप भेद जैसा बताया गया है, वैसाही हो किन्तु वे सब वाक्य निर्विशेष ब्रह्म ज्ञानी का भेद के प्राप्त होने पर भी ज्ञानी में ही पर्यवसान होते हैं सो नहीं कह सकते, क्योंकि तत्वमस्यादि वाक्यों के निर्विशेष ब्रह्म प्रतिपादन करने में उपपत्ति नहीं है, और विशिष्ट ब्रह्म परता है, यह अनेक प्रकार से दिखाया गया है, वाक्यानन्तरों से भी निर्विशेष ब्रह्मपरक निश्चय नहीं होता, यदि कोई वाक्य निर्विशेष ब्रह्म प्रतिपादकतया उपलब्ध होता तब उस वाक्य के प्रमाण के बल से प्रकरणान्तर गत निर्विशेष ब्रह्म से अपकृष्ट पदार्थ-प्रतिपादक वाक्यों के कैमुत्य न्याय से निर्विशेष ब्रह्म में ही पर्यवसानता उपपन्न होती, परंच प्रकृति में तो कोईभी वाक्य निर्विशेष ब्रह्म प्रतिपादक नहीं है, अग-

वगमाच्च । यदि किमपि वाक्यं तत्परत्त्वेनोप-लभ्येत तदा तदवष्टंभेन प्रकरणान्तरगतानामपि तदपकृष्टपदार्थपराणां वाक्यानां कैमुत्यन्यायेन तत्र पर्यवसानत्वमुपपद्यते, प्रकृते तु न कस्यापि वाक्यस्य निर्विशेषब्रह्मपरत्वमुपपद्यते, अगंधमर-समित्यादिनिषेधकवचनानामपि सर्वगंधः सर्व-रसइत्यादिवचनानुरोधेन प्राकृतगंधादिनिषेधप-रत्वोपपत्तेरित्यलं प्रसंगातिप्रसंगेन । नापि किमपि वाक्यं ब्रह्माभेदात्मकं मोक्षं गच्छतः पाप-कर्माश्लेषदाहवर्णनपरत्वेनोपलभ्यते येन तद्-

---

न्धमरसं०……इत्यादि निषेध वचनों की भी सर्वगंध. सर्व रस इस वचनके अनुरोध से प्राकृत गंधादिकों काही निषेधमें ता-त्पर्य है। इसे प्रसंगमें आए हुए प्रसंगसे अब विस्तार के कोई आवश्यकता नहीं है।

कोई भी वाक्य ऐसा उपलब्ध नहीं होता है कि जो ब्रह्म से अभेद रूप मोक्ष को जाते हुए पुरुष के पाप कर्म अश्लेष हो और उन कर्मों का जल जाना वर्णन करने वाला हो कि जिस वाक्य के बल से अप कृष्ट प्रकरण में गए वाक्यों के कैमुत्य न्याय से ब्रह्म से अभेद होजानेपर भी पर्यवसानता को उप-पन्न होवे।

पकृष्टप्रकरणान्तरगतानामपि वाक्यानां कैमुत्य-न्यायेन ब्रह्माभेदगतेऽपि पर्यवसानत्वमुपपद्येत ।

ननु बृहदारण्ये-योऽकामोनिष्काम आप्त-काम आत्मकामो न तस्य प्राणा उत्क्रामन्ति अत्रैव समवलीयन्ते ब्रह्मैवसन् ब्रह्माप्येति तद-प्येषश्लोकोभवति "यदा सर्वे प्रमुच्यन्ते कामा येस्य हृदि स्थिताः । अथ मर्त्योऽमृतोभवत्यत्र ब्रह्म समश्नुते ।" इत्यत्राप्तकामस्यात्मका-मस्य ज्ञानिनः प्राणानुत्क्रान्तिश्रुत्या गत्यनुपप-त्तेरर्चिरादि मार्गेण तद्गतिबाधादत्रैव शरीर-त-

---

अब संका करते हैं कि बृहदारण्यक में यो कामो निष्काम······जो अकाम निष्काम, लब्धकाम, और आत्मकाम पुरुष है, उसके प्राण उत्क्रमान नहीं करते किन्तु यहीं पर लीन होजाते हैं, ब्रह्म होकर ब्रह्म को प्राप्त होजाता है, इस विषय में यह श्लोक सुना जाता है कि जब हृदय में स्थित सम्पूर्ण काम इसके विलीन होजाते हैं तब मरण धर्मापुरुष अमृत होजाता है। और ब्रह्मका भोक्ता होजाता है। इस श्रुति में 'आप्त काम' और आत्मकाम ज्ञानीके प्राणोंकी अनुत्क्रान्ति श्रुति में प्रतिपादन किया है। इसलिये गति अनुपपन्न है। इसलिये अर्चिरादि मार्ग के द्वारा गति का बाध होने से इस शरीर मेंही उसके प्राण विलीन होजाते हैं। ऐसा श्रवण होने से उसकी सद्य मुक्ति होजाती है,

स्थानालयश्रवणात् तस्य सद्योमुक्त्युपपत्तेः ब्रह्मैव सन्निति तस्य ब्रह्माभेदप्राप्त्यात्मकमुक्तिश्रवणात् तदुद्दिश्य सर्वेषां प्रकरणान्तरगतानां प्रदर्शित-वाक्यानां कैमुत्यन्न्यायेनाऽवतारः उपपद्यते अभेदमोक्षापेक्षया मुक्त्यन्तरस्य दुर्बलत्वात् मुक्त्यंतरविषयत्वेन श्रुतानां कैमुत्यन्न्यायेना-भेदमुक्तिपरत्वं सुतरामुपपद्यते। कथमिति चेत् यद्यन्नाद्युपाधिक-पुरुष-पराणां ईदृशं माहात्म्यं श्रूयते तदानीं निरुपाधिक-ब्रह्मपराणां तादृशं तताप्यधिकं तद्भवेदिति किमुवक्तव्यमित्येव-

---

तथा "ब्रह्मैव सन्" इस वाक्यसे ब्रह्म के साथ अभेद प्राप्ति रूप मुक्ति प्रतिपादन होने से इसी प्रकार प्रायः करके प्रकरणान्तर-गत प्रदर्शित सभी वाक्यों के कैमुत्य-न्याय से यही अर्थ मानना होगा। अभेद मोक्ष की अपेक्षा दूसरे प्रकार की मुक्ति दुर्बल है। इसलिये अन्य प्रकारकी मुक्ति को प्रतिपादन करने वाली श्रुतियों को भी कैमुत्य-न्याय से अभेद मुक्ति परता ही उपपन्न होती है। यदि कहें कि कैसे: तो जब अन्न आदि औपाधिक पुरुष पर वाक्यों का इस प्रकार माहात्म्य सुना जाता है तब निरुपाधिक ब्रह्मपर वाक्यों का उससे अधिक माहात्म्य होगा ही. इसमें कहनाही क्या है ?

मितिचेन्न प्रदर्शितवाक्यस्य त्वदभीष्टार्थकत्वा-नुपपत्त्यात्मकामस्यार्चिरादिनैव गत्युपपत्तेः। तथाहि तत्रैवब्रह्मैवसन् ब्रह्माप्येति यदा सर्वे प्रमुच्यन्ते कामा इत्यस्य श्लोकस्यानंतरं श्रूयते तद्यथाहि निर्ल्वयनी वल्मीके मृता प्रत्यस्ताशयी-तैवमेवेदं शरीरं शेतेऽथायमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एव सोहं भगवते सहस्रं ददामीति

---

अब समाधान करते हैं कि यह शंका नहीं कर सकते हैं, क्योंकि, उक्त वाक्य का आपका अभीष्ट अर्थ उपपन्न नहीं है, इसलिये आत्म काम पुरुषकी अर्चिरादि के द्वारा गति उपपन्नहै। तथाहि "ब्रह्म सन् ब्रह्माप्येति, यदा सर्वे प्रमुच्यन्ते कामा" इस श्लोक के बाद उसी बृहदारण्यक में यह सुना जाता है कि "तद्यथाहि निर्ल्वनी वल्मीके मतार्प्रत्यस्ताशय त······जैसे समग्र सर्प की केंचुली वल्मीक के ऊपर परित्यक्त की हुई पड़ी होवे और सर्प का तरह साई हुई हो उसी प्रकार इस जीवात्मा से परित्यक्त यह शरीर भी निश्चेष्ट होकर सोजाता है। और जैसे उस समय यह जीवात्मा जीता ही हुआ अशरीर होकर रहता है। प्राण ही ब्रह्म हैं, और तेज-अर्थात् सर्व ज्योति स्वरूप है। इस प्रकार के उपदेश के प्राप्त होने से प्रहर्षित श्रीजनकजी गुरु दक्षिणा रूप से सहस्र देते हैं यह बोला इस विषय में यह श्लोक सुने जातेहैं, वह कोई रास्ता है जो सूक्ष्म है और विस्तीर्ण है, उपनिषदों में प्रसिद्ध है, और ब्रह्म दर्शी को स्पर्श किये हैं,

होवाच जनको वैदेहः। तदेतेश्लोकाभवन्त्यणुः पंथा विततः पुराणोमस्पृष्टोनुवित्तोमयैवतेनधीरा अपियन्ति ब्रम्हविदः स्वर्गं लोकमित ऊर्ध्वो विमक्ताः। तस्मिञ्छुक्लमुतनीलमाहुः पिंगलं हरितं लोहितं च एषपंथा ब्रम्हणा हानु वित्तस्ते-नैति ब्रह्मवित्पुण्यकृत्तैजसश्चेति। तत्रदेवोभू-त्वा देवं यजेतेत्यस्य देवसदृशो भूत्वेत्यर्थं कत्रवत् ब्रह्मैव सन्नित्यस्य ब्रम्ह सदृशः सन्नित्यर्थः।

---

और हे राजन्! मैंने उसका साक्षात् कार भी किया है, इस मार्ग के द्वारा ब्रह्म ज्ञानी इस लोक से युक्त होकर प्राकृत मंडल से उद्धर्ध्व देह वर्ति स्वर्ग लोक को जाते हैं। ब्रह्मलोक के मार्गके जाने वाले ब्रह्म ज्ञानी उस मार्ग में शुक्ल, नील, पिंगल, हरित और लोहित, वर्ण को बताते हैं यह रास्ता ब्रह्म से सम्बद्ध है। इसी रास्ता के द्वारा पुण्य करने वाला ब्रह्म वेत्ता और पंच ग्नि-विद्यानिष्ठ पुरुष भगवत लोक को जाता है यहां पर इन श्रुतियों में "देवोभूत्वादेवं यजेत्" इस वाक्य का अर्थ देव सदृश होकर देव का भजन करे, यह जैसे होता है। उसी प्रकार ब्रह्मैवसन् ब्रह्माप्येति" इस वाक्य का ब्रह्म सदृश होकर ब्रह्म को प्राप्त होता है, यह अर्थ होगा, यदि कहो कि पूर्व यदि ब्रह्म भाव नहीं था तो ब्रह्मत्व का अनुसंधान और प्राप्ति हो नहीं सकती, इस

ननु पूर्वमब्रह्मणः सतोब्रह्मत्वानुपपत्त्या पूर्वसिद्धस्यैवब्रह्मणः स्वस्वरूपसाक्षात्काररूपा ब्रह्मैव सन् ब्रम्हाप्येतीतिचेन्न अविद्या प्रत्यनीकस्य स्वप्रकाशस्य बम्हणः कथमप्यविद्यासंश्लेषानुपपत्त्या संसारित्वं नोपपद्यते असंसारिणः सतस्तु तस्य संसरणं तन्निवृत्तये च कर्माद्युपायैर्ब्रम्हत्वप्रत्युत्पादकत्वं नोपपद्यते इत्येवमादिबहुविरोधात् जोवस्यमुख्यब्रम्हसाक्षाद्रूपत्वानुपपत्तेः। अतएवानादितोऽविद्यापारवश्येन संसरतो जीवस्य कर्माद्युपायैरन्तः करणविशु-

लिये पूर्व से सिद्ध ब्रह्म की स्वस्वरूप से साक्षात्कार-रूपा ब्रह्म की प्राप्ति को ही ब्रह्मैव सन् ब्रह्माप्येति यह वाक्य करता है। सो नहीं कह सकते ? क्योंकि अविद्या के प्रत्यनीक (विरोध) स्व-प्रकाश स्वरूप ब्रह्म से अविद्या का संश्लेश किसी प्रकार से होही नहीं सकता, तथा अविद्या के संश्लेष न होने से संसारित्व भी नहीं होसकता। और असंसारी सत्स्वरूप उस ब्रह्म का संसरण होना और संसार की निवृति के लिये, कर्मादि उपायों से ब्रह्मत्व की प्राप्ति का उपदेश भी उपपन्न नहीं होसकता, एवमादि बहुत से विरोध होने से जीव को मुख्य ब्रह्म की साक्षात् रूपता होजाय सो नहीं होसकती, अतएव, अनादि

च्छिद्द्वारा ब्रह्मप्राप्तियोग्यत्वाय कामादिप्रमोकेन ब्रह्मसादृश्यमुपदिश्यते ब्रह्मैवसन्निति हृद्गत-कामादिप्रमोकेन ब्रह्मसादृश्येन ब्रह्मप्राप्तियोग्यः सन् ब्रह्माप्येति प्राप्नोतीत्यर्थः । अत्र ब्रह्म सादृश्यं नाम संसृतिहेतुभूतकामराहित्यमिति स्वयमेव श्रुतिः स्फुटयति तदप्येषश्लोकोभवति यदा सर्वे प्रमुच्यन्ते कामा येस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत इति । तदर्थस्तु तत्तस्मिन्नक्तेर्थे तदर्थप्रकाशक एष श्लोकोभवति श्लोकमेवाह यदेति यदा शा-

अविद्या के परवश होने से ससार भाव को प्राप्त जीव के कर्मादि उपायों से जब अंतः-करण की शुद्धि होजाती है तब ब्रह्म-प्राप्ति की योग्यता के लिये कामादि की त्याग से ब्रह्म सादृश्य का उपदेश किया जाता है। "ब्रह्मैवसन् ब्रह्माप्येति" इस मंत्र से, क्योंकि हृदयगत कामादिकों के नाश से ब्रह्म सादृश्य के प्राप्त होजाने पर ब्रह्म के प्राप्त के योग्य होता हुआ, ब्रह्म को प्राप्त होजाना है। यही इसका अर्थ है। यहांपर ब्रह्म सादृश्य अर्थ यह है कि संसार का हेतु भूत काम से रहित होजाना। इस बात को श्रुति स्वयमेव स्पष्ट करती है। 'यदा सर्वे प्रमुच्यन्ते······" इसका अर्थ यह कि जब शास्त्रोक्त उपायों से इस उपासक के हृदय में रहने वाले काम मुक्त होजाते हैं तब

स्त्रोक्तोपायैरस्य हृदि श्रिताः कामाः प्रमुच्यन्ते अथ तदा मर्त्योऽमृतोभवति संसृतिकारणकामादिरहितत्वेन ब्रह्मसदृशोभूत्वाऽमरणधर्माभवति अत्र अस्यां कामादिरहितत्वावस्थायां सत्यां ब्रह्मसमश्नुते सिंहस्थक्रौर्यादिगुणवत्वेन यथा सिंहशब्देन मनुष्य उच्यते सिंहो देवत्त इति तथा ब्रह्मगतकामादिरहितत्वेन जीवो ब्रह्मशब्देगौणोक्तनोच्यते ब्रह्मसन्निति तद्गतगुणैकदेशवत्वेन ब्रम्हसदृशः सन् ब्रम्ह प्राप्नोतीत्यर्थः तत्प्राप्तियोग्यतापादकेन ब्रम्हासादृश्येन ब्रम्ह प्राप्नोतीत्यर्थः

संसार के कारणीभूत कामादिकों से रहित होने से ब्रह्म सदृश होकर मरण धर्म रहित होजाताहै। यहां पर यहा कामादि रहित अवस्था को प्राप्ति में ही "ब्रह्म समश्नुते" यह कहा गया है, अर्थात् जैसे सिंहो देवदत्त. अर्थात् देवदत्त को सिंह कहने का तात्पर्य यह है कि सिंह गत क्रूरतादि गुण होने से सिंह शब्द से कहा जाता है। उसी प्रकार जीव में ब्रह्मगत कामादि रहित होनेसे जीवको भी ब्रह्म शब्द से कहते है। इसीलिये ब्रह्मसन्— अर्थात् ब्रह्मगत गुणक होजाने से जीव ब्रह्म सदृश होकर ब्रह्म को प्राप्त होजाता है। तात्पर्य यह है कि ब्रह्म प्राप्ति का योग्यता का आपादक ब्रह्म सादृश्यता से ब्रह्म को प्राप्ति कर लेता है अब उस ब्रह्म की प्राप्ति की प्रकारको श्रुति बतातीहै, यथा 'नि-

इदानीं तत्प्राप्तिप्रकारं दर्शयति यथा निर्ल्वयनी- मिति निर्ल्वयनीं प्राचीनत्वचं वल्मीके परित्यज्य पादोदरः सशरीरोऽन्यत्रगच्छति तथायमप्यधिकारी प्राकृतं शरीरं परित्यज्य तत्प्राप्तियोग्यतापादकेन दिव्यशरीरेण ब्रम्हप्राप्नोतीत्याह अथायमशरीरो- मृतः प्राणो ब्रह्मैव तेज एवेति अशरीरः प्राकृतशरीररहितः सर्वथा शरीररहितस्य केवल- स्यात्मनो वक्ष्यमाणेनार्चिरादिमार्गेण गत्यनु- पपत्तेः दिव्यमंगलविग्रह इत्यर्थः अतएवामृतः अमरणधर्माप्रकर्षेणानितीति प्राणः ब्रम्हैव ब्रम्ह-

---

त्वयनी" जैसे प्राचीन त्वचा को वल्मीक परही छोड़कर शरीर के सहित सब दूसरी जगह चला जाता है, इसी प्रकार यह अधिकारी प्राकृत शररको छोड़कर उस ब्रह्म प्राप्ति की योग्यता का आपादक दिव्य शरीर से ब्रह्म को प्राप्त हो जाता है। यह "अथायमशरीरोमृतः प्राणो ब्रह्मैव तेज एवेति" अर्थात् --प्राकृत- शरीर से रहित (सर्वथा शरीरसे रहित केवल आत्मा की, वक्ष्य- माण अर्चिरादि मार्ग से गति अनुपपन्न होने से) दिव्य -- मंगल विग्रह मानना ही होगा अतएव अमृत अर्थात् मरण धर्म रहित प्रकर्षेण अनीति प्राणिति प्राणः अर्थात् प्रकर्ष करके जो श्वांस को ले उसी का नाम है प्राण, ब्रह्म के सदृश होकर तेजोमय स्वप्रकाश विग्रह वाला यह जीव अर्चिरादि मार्गके द्वारा ब्रह्मको

सदृश एव तेजस्तेजोमयः स्वप्रकाश विग्रह इत्यर्थः इदानीं तस्यैवार्चिरादिमार्गेण गतिं निर्दिशति; तदेतेश्लोकाभवन्त्यणुः पन्थाः विततइत्यादिना तस्मिन्नेवोक्तर्थे उक्तार्थस्य प्रकाशका एते .वक्ष्यमाणाश्लोका भवन्ति । अणुः पन्था विततः इत्यादयः। तदर्थस्तु–पंथाः मार्गः विततः विस्तीर्णः पुराणः सनातनः तेन मार्गेणधीराः शीतोष्णादिसहिष्णवः समदुःख-सुखाः ब्रम्हविदः ब्रम्हज्ञानिनः न तु केवलमुपा-सकाः शीतोष्णादिकसहनपूर्वकं ब्रम्हैकध्यान-रूपया तदुपासनया कृतब्रम्हसाक्षात्कारस्तेनब्रम्ह-

प्राप्त होता है। इस बात को अर्चिरादि मार्ग से गति का निर्दे-श करने वाले यह श्लोक बताते हैं। अणुः पन्था विनन पुराणः इत्यादि, क्योंकि इसी कथित अर्थमें ही कथित अर्थ प्रकाशक ये वक्ष्यमाण श्लोक होते हैं, इनका अर्थ यह है, कि यह रास्ता सूक्ष्म और विस्तीर्ण है, पुरातन है, इस मार्ग शीत उष्ण आदिके सहन करनेवाले समान सुख दुख माननेवाले ब्रह्म ज्ञानी केवल उपासक नहीं किन्तु ब्रह्म ज्ञानके सहित शीतोष्णादि सहनपूर्वक ब्रह्म की ध्यान रूप एक उपासना से ब्रह्म का साक्षात्कार कर लेनेसे ब्रह्म स्वरूप के याथात्म्यवेत्ता जाते हैं। कहां जाते हैं इस

स्वरूपयाथात्म्यविद् इत्यर्थः अपियन्ति गच्छन्ति कुत्रेत्यपेक्षायामाह स्वर्गमिति तस्य सुखविशेषमात्रपरत्वमाशंक्याऽऽह लोकमिति तस्मिन् शुक्लमुत नीलमाहुः पिंगलं हरितं लोहितं देवमीशानमिति ।:तस्मिंन्मार्गे शुक्ल नीलत्वाद्युपलक्षितं देवमीशानं सूर्यं प्राप्य तेन मार्गेण ततऊर्द्धं गच्छन्तीत्याह एष पंथा इति सूर्यद्वारेण ते विरजाः प्रयांतीतिश्रुत्यन्तरात् तेनैति ब्रम्हविदिति पुनर्ब्रह्मवित्पदोपादानंद्विबंद्धसुबद्धन्यायेन ब्रह्मज्ञानिनोप्यर्चिरादि मार्गेणैवगमे निःसंदेहार्थं तदत्र ब्रह्मविदः सूर्यद्वारेण गतिश्रवणात् तत्सा-

---

अपेक्षा में स्वर्ग को जाते हैं । उसमें भी सन्देह होता है कि स्वर्ग तो सुख विशेष मात्र को कहते हैं। तब उत्तर करते हैं कि लोकम ' अर्थात् स्वर्गलोकको जाते हैं। उस स्वर्गलोकमें शुक्ल, मुत, नील, माहु········शुक्ल नीलादि से उपलक्षित सूर्य को प्राप्त होकर उस मार्ग से सूर्य के भी ऊपर जाते हैं। यह, एष-पंथा·····इस मंत्र से सूर्य के द्वारा विरक्त होकर जाते हैं। इस श्रुति से सिद्ध होता है। इससे ते नेतिब्रह्म वित्······यह पुनः ब्रह्मवित् पदका उपादान द्विबंद्धसुबद्ध न्याय से ब्रह्मज्ञानी की अर्चिरादि मार्ग से ही गति निःसन्देह होती है, यह प्रतिपादन

मान्येन येनाक्षरं पुरुषं व्याप्ता वेद सत्यं प्रोवाच तां तत्वतो ब्रह्मविद्यामिति मुराडकेश्रुतस्य ब्रह्मविद्यावत्वेनाक्षरब्रह्मविदोऽपि सूर्यद्वारेणैवगतिरुपपद्यते। किंच छांन्दोग्ये अथयदरणयायनमित्याचक्षते ब्रह्मचर्यमेव तदरश्चहवैरायरर्चार्णवौ ब्रम्ह लोके तृतीयस्यामितोदिवि तदैरं मदीयं सरस्तदश्वत्थ-सोम-सवनस्तदपराजिता पूर्वब्रम्हणः प्रभुविमितं हिरणयमयं तद्यएवैनावरं चराय

करने के लिये तस्मात्—यहाँपर ब्रह्मज्ञानी की सूर्य के द्वारा गति का श्रवण होने से इसीके सामान "येनाक्षरंपुरुषं वेद......... इस मुंडकमें सुने गये ब्रह्मविद्यमान अक्षर ब्रह्म जाननेवाले पुरुष के भी सूर्य के द्वारा ही गति सिद्ध होती है।

किंच— छान्दोग्य उपनिषदमें, अथ यदांरणयायर्णमित्याचक्षते ब्रह्मचर्यमेवतत्.......अर्थात्—अरणय निवास प्रधान जो तपविशेष है, वह ब्रह्मचर्यही है। क्योंकि 'अर' और 'एय' यह दोनों ब्रह्म लोकमें सरोवरों के नाम हैं। ब्रह्मलोकमें प्रकृत मणडल से ऊपर तिसरे दिन में (अप्राकृतद्युलोक में) "ऐरंमदीये" नामक सरोवर है और अश्वत्थ साम सवन है अपराजिता पुरी है। वही ब्रह्म कीपुरी कही जाती है, और वही पुरी सर्वेश्वरसे विशेष स्वीकृत है अर्थात् उसी पुरमें सर्वेश्वर नित्यमुक्तों से उपसेव्यमान होते हुए निवास करते हैं। और वह पुर हिरणयमय अर्थात्

चार्णवौ ब्रह्मलोके ब्रह्मचर्येणानुविन्दति तेषा-
मेवैष ब्रह्मलोकस्तेषां सर्वेषु लोकेषु कामचारो
भवतीत्यस्यानतरं श्रूयते । अथ या एता हृदयस्य
नाड्यस्ताः पिंगलस्याणिम्नस्तिष्ठंति शुक्ल-
स्यनीलस्य पीतस्य लोहितस्येत्यसौ वा आदित्यः
पिंगल एष शुक्लः एषनीलः एष पीत एष
लोहितस्तद्यथा महापथं आतत उभौ ग्रामौ
गछती मंचा मुंचैव मेवैता आदित्यस्य रश्मय-
उभौ लोकौ गछंतीमंचामुंचामुष्मादादित्यात्प्र-
तायन्ते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्य

---

प्रकाशमय है । उस ब्रह्मलोकमें "अर" "एय" नामक जो दो अर्णव है इनको जो ब्रह्मचर्य के द्वारा जानते हैं, उन्हीं के लिये यह ब्रह्मलोक है, उनका सब लोकों में कामचार हो जाता है इन दोनों मंत्रो के बाद यह मंत्र उसी उपनिषद् में श्रुत हैं कि अथ-या एताः हृदय स्यनाड्यस्ता........जो यह हृदय सम्बन्धित नाडी हैं, वेसब, पिङ्गल, सूक्ष्म, अन्न रससे और शुक्ल, नील पीत, लोहित, अन्नरससे परिपूर्ण होकर स्थित हैं, यद्यपि ये सब नाडी खाये हुये अन्न रस विशेष से बनी हुए है तथापि नाना वर्णता जो निर्देश किया गया है, वह सूर्यरस सम्बन्ध विशेष से क्योंकि सूर्य की रश्मि नाना वर्णकी होती है यह प्रसिद्ध ही है ।

प्रतायन्ते तेमुष्मिनादित्ये सृप्तास्तद्यत्रैतत्सुप्तः समस्तस्संप्रसन्नः स्वप्नं न विजानात्यासु तदा नाडीषु सुप्तोभवति तं न कश्चन पाप्मा स्पृशति तेजसाहि तदा सम्पन्नो भवत्यथ यत्रै-तदवलिमाणं नीतो भवति तमभितः आसीना आहुर्जानासि मांजानासि मामिति सयावदस्मा च्छरीरादनुत्क्रान्तोभवति तावज्जानात्यथ यत्रै-तदस्माच्छरीरादुत्क्रामत्यथैतैरेवरश्मिभिरूर्ध्वमा-क्रमते सओमिति वाहोउद्वामीयते सायावत्क्षि-प्येन्मनस्तावदादित्यं गच्छत्येतद्वै खलु लोक-

---

इसी अभिप्रायसे आगे कहते भी हैं कि यह आदित्य पिंगल शुक्ल नील, पीत, लोहित हैं।--( इन सूर्य की किरणों का हृदय से और ब्रह्म लोक से कैसे सम्बन्ध है कि जिस संबन्ध से यह जीवात्मा इस हृदय देश से निकलकर सूर्य रश्मियों के द्वारा ब्रह्म लोक को प्राप्त होता है। इस सम्बन्ध को सदृष्टान्त श्रुति बताती है ) जैसे विस्तीर्ण बड़ा रास्ता दोनों गाँव को जाता है, अर्थात्, इस गांव को और उस गांव को भी जाता है, इसी प्रकार ये सूर्य की किरणें भी दोनों लोकों को जाती है, अर्थात् इस मनुष्य लोक में भी जाती हैं और आदित्य लोक में भी जाती हैं। इसी का स्पष्टीकरण श्रुति स्वयमेव करती है कि,

द्वारं विदुषां प्रपदनं निरोधोऽविदुषां तदेषश्लोकः
शतं चैका च हृदयस्य नाड्यस्तासां मूर्द्धान-

इस आदित्य लोक से किरणें प्रसार को प्राप्त होती हैं, और वेही किरणें हृदय की नाड़ियों में सम्बन्ध होजाती है, और पुनः इन नाडीयों से, सम्बन्ध होती हुई पुनः आदित्य मंडल में एकत्रित होजाती है। जब यह जीव समस्त इन्द्रियों के व्यापारों को रोक कर, अतएव, वाह्यदेहादिकों के अभिमानादिक विलीन हो जाते हैं वैषयिक सुख दुःखादि कलंक रहित होकर सोया हुआ स्वप्न को भी नहीं जानता है, तब इन्हीं नाडियों में प्रवेश कर जाता है, और उन नाडियों के द्वारा पूरीतनी नामक नाड़ी में सो जाता है, तब सोये हुए इस पुरुष का कोई भी पाप स्पर्श नही करता है अर्थात् पापों का आरंभक किसी भोग पदार्थ का आरंभ नहीं होता। क्योंकि उस समय तेज स्वरूप परमात्मा से मिल जाता है। और जब यह जीवात्मा अत्यन्त कृश होजाता है तब चारो तरफ से बैठे हुए बांधव इस कृश पुरुष से पूछते हैं कि हमको जानते हो? हमको पहिचानते हो? तब वह जबतक इस शरीर से निकलता नहीं है तबतक कहता रहता है कि, मैं जानता हूँ पुनः जब शरीर से निकल जाता है तब इन्हीं सूर्य किरणों के द्वारा उद्र्ध्व लोक को आक्रमण करता है, क्योंकि वह विद्वान पुरुष "ॐ" यह भगवत नाम का उच्चारण करता हुआ, मरण को प्राप्त होता है। वह जैसे अपने मन का लोप करता है वैसेही तुरन्त आदित्य लोक को प्राप्त होता है, क्योंकि यह आदित्य मंडल ही ब्रह्म लोक का द्वार है। यह आदित्य मंडल ही ब्रह्मवेत्ता को ब्रह्म लोक में पहुँचाने वाला है, अविद्वान लोग इस आदित्य मंडल को नहीं

मभिनिःसृतैका । तयोर्द्धमायन्नमृतत्वमेति विश्वगन्या क्रमणो भवन्तीति तत्रासौ वा आदित्यः पिङ्गल एष शुक्ल एष नील एष पीत एष लोहित इत्यादित्यस्य शुक्लादिरूपत्व-श्रुतेः एतद्वै खलु लोकद्वारं विदुषामिति तस्य विद्वत्प्राप्य-लोकद्वारत्व मुक्त्वा तेषां तन्मार्गेण गत्यवगमात् शतं चैका चेति मूर्द्धन्या नाड्या तेषामेव विदुषामुत्क्रान्तिनिर्देशाच्च ।

बृहदारण्येपि तत्समानार्थकत्वेन तस्मिन् शुक्लादिशब्दैरादित्यो निर्दिष्ट इत्यवगमात्

---

गमन कर सकते है। इस विषय में यह श्लोक कहा जाता है, कि एक सौ एक नाडी हृदय की हैं उनमें से एक नाडी मूर्द्धा को गई हुई है उस नाडी के द्वारा जो ऊर्ध्व गमन करतेहैं वे अमृत को प्राप्त हो जाते है अन्य नाडियों के द्वारा गमन करने वाले संसार में ही प्राप्त होते हैं। यह श्रुतियों में निर्देश किया गया है। तो यहां आदित्य को शुक्ल-नील-पीत-पिंगल आदि रूप से निर्देश किया गया है और विद्वान के लिये ब्रह्म लोक प्राप्ति का द्वार यही सूर्य मंडल है, यह कहने से ब्रह्म ज्ञानियों की इसी मार्ग के द्वारा गति होती है यह निश्चय होता है क्योंकि "शतं चैका" इस मंत्र से विद्वानों की इसी मार्ग में गति का निर्देश किया गया है, बृहदारण्य में भी यही समानार्थक श्रुति से

एष पन्था तेनैति ब्रह्मविदित्यादित्यद्वारेणैव ब्रह्म विदांगतिर्निर्दिष्टेति निश्चयाच्च योऽकाम आत्मकामो न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते ब्रह्म सन् ब्रह्माप्येतीति पूर्ववाक्यश्रुतस्यात्मकामस्य सूर्यद्वारेणैव गतिर्निश्चीयते। न चात्र वाक्यभेदाशंकया तदर्थभेद आशंकनीयः तत्रैव तदेते श्लोका भवन्त्यणुः पंथा इत्युत्तरवाक्यस्य पूर्ववाक्यार्थप्रकाशकत्वश्रुतेः प्रकाश्यप्रकाशकयोः पूर्वोत्तरवाक्ययोरेकवाक्यत्वावगमात्।

---

"तस्मिन् शुक्ल, माह्...इत्यादि शुक्लादि शब्दों से सूर्य का निर्देश निश्चय होता है. एष पंथा ते नैत ब्रह्मवित्" इस मंत्र से सूर्य के द्वारा ब्रह्म ज्ञानी के गति का निर्देश किया गया है यह निश्चय होताहै। "यो काम आत्म कामः इत्यादि पूर्व वाक्य में श्रुत आत्म कामी पुरुष का सूर्य के द्वाराही गति का निश्चय होता है वाक्य भेद की शंका से अर्थ भेद की आशंका नहीं करनी चाहिये। क्योंकि उसी जगह "तदेते श्लोका भवन्ति अणु पन्था" इत्यादि उत्तर वाक्य का पूर्व वाक्य के अर्थ की प्रकाशकता होने प्रकाश्य, प्रकाशक स्वरूप पूर्व उत्तर वाक्यों की एक वाक्यता निश्चित होती है।

मभिनिःसृतैका । तयोद्र्ध्वमायन्नमृतत्वमेति विश्वगन्या क्रमणो भवन्तीति तत्रासौ वा आदित्यः पिङ्गल एष शुक्ल एष नील एष पीत एष लोहित इत्यादित्यस्य शुक्लादिरूपत्व-श्रुतेः एतद्वै खलु लोकद्वारं विदुषामिति तस्य विद्वत्प्राप्य-लोकद्वारत्व मुक्त्वा तेषां तन्मार्गेण गत्यवगमात् शतं चैका चेति मूर्द्धन्या नाड्या तेषामेव विदुषामुत्क्रान्तिनिर्देशाच्च ।

बृहदारण्येपि तत्समानार्थकत्वेन तस्मिन् शुक्लादिशब्दैरादित्यो निर्दिष्ट इत्यवगमात्

---

गमन कर सकते है। इस विषय में यह श्लोक कहा जाता है, कि एक सौ एक नाडी हृदय की हैं उनमें से एक नाडा मूर्द्धा को गई हुई है उस नाडी के द्वारा जो उद्र्ध्व गमन करतेहैं वे अमृत को प्राप्त हो जाते है अन्य नाडियों के द्वारा गमन करने वाले संसार में ही प्राप्त होते हैं। यह श्रुतियों में निर्देश किया गया है। तो यहां आदित्य को शुक्ल-नील-पीत-पिगल आदि रूप से निर्देश किया गया है और विद्वान के लिये ब्रह्म लोक प्राप्ति का द्वार यही सूर्य मंडल है, यह कहने से ब्रह्म ज्ञानियों की इसी मार्ग के द्वारा गति होती है यह निश्चय होता है क्योंकि "शतं चैका" इस मंत्र से विद्वानों की इसी मार्ग में गति का निर्देश किया गया है, बृहदारण्य में भी यही समानार्थक श्रुति से

एष पन्था तेनैति ब्रह्मविदित्यादित्यद्वारेणैव ब्रह्म विदांगतिर्निर्दिष्टेति निश्चयाच्च योऽकाम आत्मकामो न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते ब्रह्म सन् ब्रह्माप्येतीति पूर्ववाक्यश्रुतस्यात्मकामस्य सूर्यद्वारेणैव गतिर्निश्चीयते। न चात्र वाक्यभेदाशंकया तदर्थभेद आशंकनीयः तत्रैव तदेते श्लोका भवन्त्यणुः पंथा इत्युत्तरवाक्यस्य पूर्ववाक्यार्थप्रकाशकत्वश्रुतेः प्रकाश्यप्रकाशकयोः पूर्वोत्तरवाक्ययोरेकवाक्यत्वावगमात्।

---

"तस्मिन् शुक्ल, मार्ह" इत्यादि शुक्लादि शब्दों से सूर्य का निर्देश निश्चय होता है. एष पंथा ते नैत ब्रह्मवित्" इस मंत्र से सूर्य के द्वारा ब्रह्म ज्ञानी के गति का निर्देश किया गया है यह निश्चय होताहै। "यो काम आत्म कामः इत्यादि पूर्व वाक्य में श्रुत आत्म कामी पुरुष का सूर्य के द्वाराही गति का निश्चय होता है वाक्य भेद की शंका से अर्थ भेद की आशंका नहीं करनी चाहिये। क्योंकि उसी जगह "तदेते श्लोका भवन्ति अणु पन्था" इत्यादि उत्तर वाक्य का पूर्व वाक्य के अर्थ की प्रकाशकता होने प्रकाश्य, प्रकाशक स्वरूप पूर्व उत्तर वाक्यों की एक वाक्यता निश्चित होती है।

किंच बृहदारण्ये-ब्रह्म सन् ब्रह्माप्येतीत्यस्यानन्तरं तदेकःश्लोको भवतीति तदर्थप्रकाशकं च्यह्रियते-यदा सर्वे प्रमुच्यन्ते कामा येस्य हृदिस्थिता इतीदं वाक्यं। काठके-"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे। यदा सर्वे प्रमुच्यन्ते कामा येस्य हृदि स्थिताः। अथ मर्त्योऽमृतोभवत्यत्रब्रह्म समश्नुते। शतं चैका च हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिःसृतैका त योर्द्धं मायन्नमृतत्वमेतोति तस्यैव वाक्यस्यानन्तरं तदुक्तामृतभवनप्रकारबोधकं शतंचैका चेति नाडीपरं वाक्यं श्रूयते। तत्र अथ मर्त्यो-

किंचः—वृहदारण्यक में—"ब्रह्म सन् ब्रह्माप्येति,, तदेषश्लोको भवति अर्थात् तदर्थक प्रकाशक—"यदा सर्वे प्रमुच्यन्ते,, यह वाक्य है। तथा कठोपनिषद में-भिद्यतेहृदयग्रन्थि··· यदा सर्वे प्रमुच्यन्ते शतं चैका हृदयस्यनाड्य,, आदि बचन सुने गये हैं, पूर्व वाक्य के बाद कहे हुए अमृत भवन बोधक प्रकार को "शतंचैका" यह नाडीपर वाक्य श्रुत है, यहां "अथ मर्त्योमृतोभवति" यह अमृत भवन के शंका होती है कि कैसे अमृत

मृतोभवतीत्यत्रकथममृतो भवतीत्यमृत भवान्
प्रकारप्रश्ना शंकानिवारकं नाडीपरं वाक्यं बो-
ध्यम् तत्कथमितिचेत कथममृतो भवतीत्युक्ते
शतं चैका च या हृदस्य नाड्यस्तासां मध्ये
एका सुषुम्नाख्या मूर्द्धानमभिसृता व्याप्ता तया
नाड्योदूर्ध्वं शरीरतोवहिरायन् न तु तत्रैव शरीरे-
ऽमृतत्वमेतीत्येवं । तत्रैवं सत्यत्रात्मकामस्य
शरीराद्वहिर्निःसृतस्यामृतत्वनिर्णयात् प्राणसम्ब-
न्धं विना तु तस्य शरीराद्वहिर्गत्यनुपपत्त्या
सप्राणस्यैव तस्यशरीराद्वहिर्गतिनिश्चयात् । बृहदा-

होता है, इस शंकाका निवारक नाडीपर वाक्य जानना चाहिये।
यदि कहो कैसे ? तो सुनो—कैसे अमृत होता है, यह कहनेपर
शतं चैका यह मंत्र यह बताता है कि हृदय की १०१ नाडी हैं,
उनमें से एकसुषुम्ना नामक नाडी मूर्धा को व्याप्त किये है, उस
नाडी से शरीर बाहर निःसरण करता हुआ ही अमृत को प्राप्त
करता है, अस्तु उसी शरीर में रहते हुए ही नहीं प्राप्त करता
है। इस प्रकार विचार करने पर यही निर्णय होता है कि आत्म-
कामी पुरुष शरीर से बाहर निकल करके ही अमृत को प्राप्त
करता है। प्राण सम्बन्ध के बिना जीव को शरीर से बाहर गति
अनुपपन्न है, इसलिये प्राण के सहित उसकी शरीर से बाहर
गति होती है यह निश्चय है। बृहदारण्यक, और कठोपनिषद्के

रण्यकाठकवाक्ययोरेकवाक्यत्वाच्च । गुणोप-संहारन्यायेन काठकश्रुतस्य नाडीपरवाक्यस्य बृहदारण्यकेपि नयनाच्चात्रैव समवलीयन्ते, अत्र ब्रह्म समश्नुत इत्युक्तस्यात्रशब्दस्य न शरीरपरत्वमुपपद्यते किं तु अवस्थाविशेषपर-त्वमेव आत्मकामस्यापि मूर्द्धन्या शरीराद्बहि-र्निर्गतस्यामृतत्वनिर्णयादित्येवमात्मकामस्या-प्यर्चिरादिनैव गतिरुपपद्यते, न तु त्वदभीष्टा सद्योमुक्तिः ।

नतु तर्हि न तस्य प्राणा उत्क्रामन्तीति

---

वाक्यों की एक वाक्यता होने से गुणोपसंहार न्यायसे, काठक में सुने गये नाडी पर वाक्य का बृहदारण्यक में भी अनुवर्तन करना चाहिये। इसलिये "अत्रैव समवलीयन्ते, अत्रब्रह्म सम-श्नुते,, इन वाक्यों में कहा गया अत्र शब्द शरीर परक नही है किन्तु अवस्था विशेष पर है, अतः आत्म-कामी पुरुष जो कि मूर्धन्य नाडी से शरीर से बाहर निकला है, उसको अमृतत्व की प्राप्ति का निर्णय होने से आत्म-कामी पुरुष की अर्चिरादि के द्वारा ही गति उपपन्न होती है। आपकी अभीष्ट, सद्योमुक्ति कथमपि उपपन्न नहीं हो सकती ।

अब सन्देह यह करते हैं कि, "नतस्य प्राणा उत्क्रामन्ति,, इस मंत्र में प्राणों के उत्क्रान्ति का निषेध किस अपादान से

प्राणोत्क्रान्ति-निषेधः कस्मादुपपद्यते अत्रैव समवलीयन्त इत्युक्ते नात्रशब्देन किं परामृश्यत इतिचेदुच्यते तेनात्रशब्देन योऽकाम आप्तकाम आत्मकाम इतिप्रकृतः आत्मा परामृश्यते न तस्य प्राणा उत्क्रामन्तीति तच्छब्देनापि स-एवपरामृश्यते कस्मान्नोत्क्रामन्तीत्यपेक्षायां स एव प्रकृत आत्मा तदुपादानत्वेन गृह्यते न तस्य प्राणा इति प्राणानां तच्छब्दपरामृष्टात्म-सम्बन्धित्वावगमात् ।

ननु बृहदारण्य एव प्रकरणान्तरे-याज्ञ-

करते हैं, और अत्रैव समवलीयन्ते,, इसे कहे गये 'अत्र' शब्द से किसका परामर्श करते हैं ? समाधान—यह है कि उस अत्र शब्द से यो कामः आप्तं कामः·· प्रकृत आत्मा का ही परा-मर्श होता है, "न तस्य प्राणा उत्क्रामन्ति" इस वाक्य में तच्छब्द से ही आत्मा काही परामर्श होता है किससे प्राण उत्का-न्ति नहीं करते यह अपेक्षा होनेपर वही प्रकृत आत्मा अपादान रूप से गृहीत होता है पूर्वोक्त प्राणोत्क्रान्ति निषेध वाक्य में भी प्राणों का तच्छब्द से परामृष्ट आत्म सम्बन्धित्व का निश्चय होता है ।

अब यह सन्देह करते हैं कि जैसे बृहदारण्यक में ही दूसरे प्रकरण में, याज्ञवल्क्येति होवाच यत्रायं पुरुषोमृयते

ल्क्येति होवाच यत्रायं पुरुषो म्रियत उद-
स्मात्प्राणा उत्क्रामन्त्याहोस्विन्नेतिनेति होवाच
याज्ञवल्क्योऽत्रैव समवलीयन्त इत्यत्रार्त्तभाग-
प्रश्नोत्तरत्वेन प्राणानुत्क्रान्तिवचनं याज्ञवल्क्य-
स्य श्रूयते यथा तथानात्र कस्यापि प्रश्नः
श्रूयते उत आशंकापूर्वकप्रश्नं विना तन्निषेध-
वचनं नोपपद्यते इति चेच्छृणु योऽकामो
निष्काम आप्तकाम आत्मकाम इत्यस्यानन्तरे
पूर्वतने ग्रन्थे तद्यथा पेशस्करी पेशसो मात्रा-
मादायान्यं नवतरं कल्याणतरं रूपं तनुत एव-

इत्यादि प्रश्न करने पर उवाच याज्ञवल्क्य अत्रैव समवलीयन्ते यहांपर आर्तभागके प्रश्न के उत्तर रूपमें प्राणों की उत्क्रान्तिका निषेध वाक्य याज्ञवल्क्य का सुना जाता है इसी प्रकार यहां किसी का प्रश्न भी नहीं है कि जिसके आशंका का पूर्व पत्त कर के और उसके निषेध वचन का उत्पादन किया जाय। सो नहीं कह सकते हैं, क्योंकि, "यो कामो निष्काम" इस वाक्यके बाद पूर्व तन ग्रंथ में, तद्यथापे‥जैसे पेशस्करी-पेश से मात्रा को लेकर अन्य नवीन कल्याणमयरूपका विस्तार करता है, इसी प्रकार यह आत्मा भी इस शरीर को नाश कर अविद्या के द्वारा अन्य नवीन कल्याण तर रूप को चाहे तो पितृ संबन्धि अथवा

मेवायमात्मेदं शरीरं निहत्याविद्यागमयित्वा-न्यं नवतरं कल्याणतरं रूपं कुरुते। पित्र्यं वा गंधर्वं वा प्राजापत्यं वा ब्राम्हं वान्येषां वा भूतानां स वा अयमात्मा ब्रम्ह विज्ञानमयो मनो-मयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः पृथिवीमय आपोमयो वायुमय आकाशमयस्तेजोमयो तेजो मयःकाममयोऽकाममयःक्रोधमयोऽक्रोधमयोः धर्म मयोऽधर्ममयः सर्वमयस्तद्यदेतदिदं मयोऽदोमय इति। यथाकारो यथाचारो तथा भवति साधुकारी साधुर्भवति पापकारो पापोभवति पुण्यः पुण्येन कर्मणा भवति पापः पापेनाथो खल्वाहुः काम-

अन्य-नवीन कल्याण तर रूप को, चाहे तो पितृ संबन्धि अथवा गंधर्व संबन्धि वा, देव, प्रजापत्य, ब्रह्म सम्बन्धी अथवा अन्य किसी भूत सम्बन्धिरूप कर लेता है, यह आत्मा ब्रह्म है विज्ञान-मय है मनोमय, प्राणमय चक्षुर्मय, श्रोत्रमय, पृथ्वीमय, आप-मय, वायुमय, आकाशमय, तेजोमय, काममय, अकाममय, क्रोधमय, अक्रोधमय, धर्ममय, अधर्ममय, सर्वमय, इदंमय, अदोमय है। यथा कार्य है यथाचारी होता है वैसा ही हो जाता है, अर्थात्—साधुकारी साधु होता है और पापकारी पापी होता है, पुण्यकर्म से पुण्यात्मा होता है पाप से पापी होता है। अब

मय एवायं पुरुष इति। स यथा कामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभिसम्पद्यते। तदेष श्लोको भवति तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य प्राप्यान्तं कर्मणस्तस्य यत्किंचेह करोत्ययं तस्माल्लोकात्पुनरेत्यास्मै लोकाय कर्मण इतीत्यत्र सकामिनः पुरुषस्य पित्र्याद्यनेकरूपधारित्वेनोर्द्ध्वमधश्चानेकशो गमनागमनावगमात्। उर्द्ध्वमधश्च जीवगतेः प्राणसम्बन्धं विनानुपपत्तेस्तस्य प्राणा नोत्क्रामन्ति किंत्वा-

---

इस प्रकार से कहते हैं कि यह पुरुष काममय है, वह जैसे कामवाला होता है, वैसा ही क्रतु होता है, और जैसा क्रतु होता है वैसा ही कर्म करता है और जैसा कर्म करता है उसी फल को प्राप्त करता है, इस विषय में यह श्लोक है कि कर्मसक्त पुरुष कर्म के साथ ही उसीको प्राप्त होता है कि जिसमें मन आसक्त था, उस कर्म के फल को भोग करके जो भी इसने कर्म किया है उसके फल को भोग कर उस लोक से फिर भी कर्म करने के लिये इस लोक में चला आता है। इस प्रकरण में सकामी पुरुष को अनेक पितृ आदिरूप धारण करने को और उपर और नीचे आदि अनेक गमन आगमन को बताया गया है,

त्मना साकं गच्छन्तीत्यवधृते सतीयं शंका जाता सकामवन्निष्कामस्यात्मकामस्यापिप्राणा आत्मना साकं गच्छन्त्याहोस्वित्तद्विलक्षणत्वेनात्मकामस्य प्राणास्तेन साकं न गच्छन्ति किन्तु तत उत्क्रामन्तीति केवलं तामपाकरोति स्म श्रुतिः।

स्वयमेव योऽकाम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्तीति न तस्येत्यस्यानन्तरमपि शब्दो द्रष्टव्यो न तस्यापीत्येवं सकामवन्निष्कामस्यात्मकामस्यापि प्राणानोत्क्रामन्तीति तदर्थः। अत्र मरणसमये सकामात्मकामयोरुभयोरपि

---

परन्तु ऊपर नीचे जीव की गति प्राण सम्बन्ध के बिना अनुपपन्न है, इसलिये जीवके प्राणों की उत्क्रान्ति नहीं होती किन्तु जीवात्मा के साथ ही जाते हैं। यह निश्चय हो जाने पर यह शंका हो जाती है कि सकामी पुरुष की तरह निष्काम, आत्मकाम पुरुष के प्राण भी आत्मा के साथ ही जाते हैं, अथवा विलक्षण भाव से आत्मकाम के प्राण जाते हैं। अथवा आत्मकाम जीवसे प्राण विलक्षण होनेसे उसके साथ नहीं जाते किन्तु उससे अलग उत्क्रमणकरजाते हैं। इस शंकाको श्रुति स्वयमेव निराकरण करती है कि यो काम आप्तकाम न तस्य प्राणाउत्क्रामन्ति यहांपर "न तस्य" इसके बाद 'अपि' शब्द का भी देखना

प्राणा आत्मनो नोत्क्रामन्ति किन्तु तमेव सम्प-द्यते इत्याह छान्दोग्यश्रुतिः। अस्य सोम्य प्रयतो वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यामिति तर्हि मृत्युः प्राणवियोग इति धातुव्युत्पन्नो मृत्यु शब्दः। प्राणैर्वियोगस्तु कस्य भवतीति चेत् शरीरस्य तत आत्मनः उत्क्रान्त्य-नन्तरं तस्यैव निश्चेष्टत्वादिदर्शनात् नित्य-

---

चाहिये। तब ऐसा हो जायगा कि "न तस्यापि" अर्थात् सका-मी पुरुष की तरह निष्काम पुरुष के भी प्राण उत्क्रमण नहीं करते। (ऐसा विचार करने पर यह निश्चय होता है) कि मरण के समय में सकाम और आत्म काम दोनों ही पुरुषों के प्राण आत्मा से उत्क्रमण नहीं करते किन्तु उसी में मिल जाते है, यह छान्दोग्य श्रुति बताती है। "अस्य सोम्ये प्रयतो वाङ् मनसि सम्पद्यते" अर्थात् हे सोम्ये! मरते हुए पुरुष की वाक मनमें मिल जाती है, मन प्राणमें; प्राण तेजमें और तेज पर देवता में इति। अब यहांपर यह प्रश्न उठता है कि "म्रियप्राण-वियोगे" इस धातु से बना हुआ मृत्यु शब्द है। तब आत्मा से यदि प्राणों का वियोग नहीं होता तो मृत्यु किसोकी होती है? इसका समाधान यह है कि शरीर से प्राण और आत्मा का उत्क्रमण होजाने से शरीर की ही मृत्यु होती है, क्योंकि प्राण और आत्मा के निकल जाने के बाद शरीर में निश्चेष्टा, कर चरण आदि व्यापार राहित्य देखा जाता है, आत्मा तो नित्य

स्यात्मनस्तु मृत्यनुपपत्तेः, 'न जायते म्रियते वा कदाचिदिति स्मृतेश्च। अतो न तस्य प्राणा इति तच्छब्दस्य प्रकृताकामात्मकाम चेतन-पुरुषपरामर्शकत्वेनाश्रुत शरीरं परामर्शकत्वं नोपपद्यते। न तस्य प्राणाइति पुरुषसम्बन्धि-त्वेन ज्ञातानां प्राणानामपादानापेक्षायामश्रुतस्य शरीरस्यापादानत्वकल्पनातः संबन्धावधित्वेन ज्ञातस्यात्मन एवापादानत्वकल्पनोपपत्तेः। शा-खान्तरे स्फुटं तस्यापादानत्वश्रुतेश्च न तस्मा-त्प्राणा उत्क्रामन्तीति।

---

है उसकी मृत्यु ही अनुपपन्न है, क्योंकि "न जायते म्रियते वा कदाचित्..."अतः "नतस्य प्राणाः......"यहांपर त च्छब्द प्रकृत निष्काम, आत्म-काम चेतन पुरुष का परार्शक होने से अश्रुत शरीर का परामर्शक कथमपि नहीं होसकता। क्योंकि पुरुष समबन्धित या ज्ञात प्राणों की अपादान की अपेक्षा होने पर अश्रुत शरीर को अपादान कल्पना करने की अपेक्षा से सम्बन्ध के अवधितया ज्ञात आत्मा का ही अपादान करना अच्छा है ( अर्थात् जैसे प्राण को हम शरीर समबन्धि माने और शरीर को आत्म समबन्धि माने तो अन्न परम्परा की समाप्ति आत्मा में ही माननीय होगी। इसलिये प्राणों को आत्म सम्बन्धि मानना ही उपयुक्त है, और प्राणोत्क्रान्तिका अपादान आत्माकोही

तदेवं जीवादेव प्राणोत्क्रान्तिनिषेध उपपद्यते न शरीरादितितदर्थनिर्णायकसूत्राभ्यां प्रतिषेधादितिचेन्न शारीरा दिति स्पष्टो ह्येकेषामिति चाभ्यामवगम्यते। तदर्थस्तु नन्वथा कामय मानो योऽकामो निष्काम आप्तकाम आत्म कामः न तस्य प्राणाउत्क्रामन्तीति परब्रह्मविदः शरीरा त्प्राणोत्क्रान्ति प्रतिषेधान्नास्त्युत्क्रान्तिः प्राणानाम्। शरीरात् तथा पूर्व आर्त्तभाग प्रश्नोत्तरेपि विदुषः शरीरात्प्राणा उत्क्रान्तिनिषेधश्रवणाच्च। तत्रायं पुनर्मृत्युं जयति य एवं वेदेति विद्वांसं प्रस्तुत्य

---

मानना चाहिये। तथा दूसरी शाखाओं में आत्मा को अपादान स्पष्ट श्रुत है, न तस्मात्प्राणाः उत्क्रामन्ति" अर्थात् उस आत्मा से प्राण उत्क्रमण नहीं करते। इसलिये जीवसे ही प्राणोत्क्रान्ति का निषेध उपपन्न है, शरीर से नहीं, इस अर्थ के निर्णायक "प्रतिषेधात् इति चेन्न, शरीरात्इति, "स्पष्टो ह्येकेषां" इस दोनों ब्रह्म सूत्रों से निश्चय होता है इन दोनों सूत्रों का अर्थ यह है कि अकामय मानो यो काम निष्काम" इस श्रुति से कथित पर-ब्रह्म ज्ञानी के शरीर से प्राणों के उत्क्रांति का प्रतिषेध होने से शरीर से प्राणों के उत्क्रान्ति नहीं है। तथा दूसरी जगह आर्तभाग ऋषि के प्रश्न के उत्तर में भी विद्वान् के शरीर

